आगमोद्धारक-ग्रन्थमालाया चतुर्त्रिंश रत्नम् ।

णमोत्थु ण समणस्स भगवओ महावीरस्स

पू आगमोद्धारक-आचार्यप्रवरश्री-आनन्दसागरसूरीश्वरेभ्यो नमः ।



# आगमोद्धारक-कृतिसन्दोहः ।

तस्याय जैनगीता-आगममहिमा-मुनिवसनसिद्धिस्तुतित्रयरूप

## पञ्चमो विभाग. ।



सशोधक

प० पू० गच्छाधिपति-आचार्य-श्रीमन्माणिक्यसागर-सूरीश्वरशिष्य शतावधानी मुनिलाभसागर

प्रतय ५०० ] [ मूल्यम् २-०० पै

वीर सवत् २४९० — वि सवत् २०२० — आ स १५

# शुद्धिपत्रम् ।

| पृ | प | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १३ | नाम | नाम |
| ५ | १९ | भवे | भवे |
| ७ | ६ | वन्या | वन्ध्या |
| ११ | ५ | सेना, | सेनाऽ |
| ,, | १० | नियात | नियाऽत |
| १३ | १४ | मुद्धे | मुद्धं |
| १६ | २७ | नार० | धार० |
| १७ | १८ | घ्रये न | घ्रयेन |
| १८ | ८ | मापू | मापु |
| २९ | १३ | प्युर्नो | पुर्वी |
| ३५ | १ | तद्देत्रे | तद्देवे |
| ५१ | १६ | तत | तत |
| ५३ | १७ | सा त | सति |
| ,, | १५ | सुकुते | सुकृते |
| ५७ | २ | वार्च्य | वाद्धय |
| ५८ | १० | पेत्स्या गुरु | पेत्स्याऽगुरु |
| ६० | ३ | वा- | वा |
| ६३ | १२ | मतान | मता न |
| ६५ | ७ | भाधा | भाषा |
| ,, | १९ | दापिता | दोपिता |
| ६६ | १ | ऽसु | सु |
| , | ९ | निवृत्ति | निवृति |
| ६८ | १४ | नोघ | नौघ |
| ६९ | ९ | पृथक्त्वे न | पृथक्त्वेन |
| ७३ | ८ | द्विका | द्विका |
| ,, | १५ | च्छवासो | च्छ्वासो |
| ७४ | ३ | क्षय | चय |
| ७५ | १४ | चारन् | चरन् |
| ७८ | २० | परदा | परदाः |
| ८० | १२ | सविशेप | स विशेप |
| ८१ | १ | सङ्गो | मङ्गे |
| ८२ | ७ | सुभ | शुभ |
| ८३ | ३ | अहित्व | अहो |
| ८६ | ८ | या | ये |
| ९० | १५ | जनतान | जनाना |
| ९४ | ७ | श्रत्य | श्चैत्य |
| ,, | १३ | मज्मयं | वाङ्मय |
| ९७ | ८ | कल्लित | कल्पित |
| ९६ | ११ | सं घ | मङ्घ |
| ९९ | १२ | सत्वा | सत्त्वा |
| १०३ | ३ | पदाङ्कस् | पदाङ्कम् |
| १०६ | २ | सङ्घे | सङ्घे |
| १११ | ८ | दशक | देशन |
| ११२ | १ | यातेन | याते न |
| ११२ | १८ | सभा० | स्वभा० |
| ११४ | १९ | निगत | निर्गत |

| पृ. | पं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११५ | ३ | दृशां | दशां |
| ,, | १० | च्छेदात् | छेदात् |
| ११७ | १० | अधिक्कार | अधिकार |
| १२२ | ७ | निजम् | निजः |
| १२५ | १९ | धरेयुः | धैर्येयुः |
| १२६ | ६ | स्तीर्यन्त | नीर्यन्त |
| ,, | १० | पुगात् | पूगात् |
| १२८ | १० | मेकान्तिकं | मैकान्तिकं |
| ,, | ११ | ,, | ,, |
| १३१ | ५ | यशसा | यशसां |
| १३२ | १८ | यन्नात् | यत्नात् |
| १३३ | ४ | कुलिशाभ | कुलिशोऽत्र |
| ,, | १५ | प्रभव | प्रभव |
| १३५ | २ | विषभां | विपमां |
| १३६ | ३ | शुद्ध | शुद्धि |
| १४१ | १५ | भावो | भावो |
| १५० | ५ | रत्रा | रत्र |

| पृ. | पं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५१ | १५ | क्तो | त्को |
| १५२ | ८ | आर्द्धो | आर्द्धी |
| १५३ | १६ | न | सु |
| १५७ | ६ | त्रिंशत् | स्त्रिंशत् |
| १५९ | १२ | गमाना | गमानां |
| १६१ | १८ | भविञ्या | भविञ्याः |
| १६६ | २ | भवति | भवति |
| १७८ | ४ | घर्मं | धर्मं |
| १८५ | ४ | कायगा | काय |
| १८६ | १२ | वर्धौः | वर्धौ |
| १८७ | ५ | मुतो | युतो |
| १८९ | १७ | देवे | देवे |
| १९४ | ७ | स्थित | स्थिति |
| २०८ | ६ | प्राप्तौ | प्राप्तो |
| ,, | १० | मवा | भवा |
| २१३ | ५ | अय | अयं |
| २३१ | ४ | शास्त्र | शास्त्रे |
| २३८ | १६ | वधिक | वधिक |

# — विषयानुक्रम —



★

# । प्रकाशकीय-निवेदन ।

प० पू० गच्छाधिपति आचार्य श्री माणिक्यसागरसूरीश्वरजी महाराज आदि ठाणा वि. सं. २०१० ना वर्षे कपडवंज शहेरमां मीठाभाई गुलाबचंदना उपाश्रये चतुर्मास बीराज्या हता । आ अवसरे तेओश्रीना पवित्र आशीर्वादे आगमोद्धारक-ग्रन्थमालानी स्थापना थएली हती. आ ग्रन्थमालाए त्यारबाद प्रकाशनोनी ठीकठीक प्रगति करी छे ।

तेओश्रीनी पुण्यकृपाए आ 'आगमोद्धारककृतिसंदोह'नो भाग ५ मो के जेमां 'जैनगीता', 'आगममहिमा' अने 'मुनि-वसनसिद्धि' नामनी त्रण भव्य कृतिओ छे ते ग्रन्थने आगमोद्धारक ग्रन्थमालाना २४ मा रत्न तरीके प्रगट करतां अमने बहु हर्ष थाय छे.

आनी प्रेस कोपी तथा आनुं संशोधन प० पू० गच्छाधिपति आचार्यश्री माणिक्यसागरसूरीश्वरजीनी पवित्र दृष्टि नीचे शताबधानी मुनिराजश्री लाभसागरजीए करेल छे. ते बदल तेओश्रीनी तेमज जेओए आना प्रकाशनमां द्रव्य तथा प्रति आपवानी सहाय करी छे. ते बधा महानुभावोनो आभार मानीए छीए।

लि०

प्रकाशक

णमोत्थु णं समणस्स भगवओ महावीरस्स ।

पू० आगमोद्धारक-आचार्यश्री आनन्दसागरसूरि-प्रणीता

# जैनगीता ।

। अध्याय प्रथम । ( अर्हदधिकार )

अर्हतो मनुते देवान, दर्शयन्तश्चतुर्दश ।
स्वप्नान् गर्भावतारे ये, मलजन्मालयर्जिता ॥१॥
जातमात्रा सुराद्रौ येऽभ्यसिच्यन्त सुरेश्वरै ।
न स्तन्यपा सुरानीत-फलाशा उचितक्रिया ॥२॥
त्यक्तहिंसादिपाप्मानोऽकम्प्या परिषहादिभि ।
हत्वा घातीनि कर्माण्य, ज्ञान सहायनिस्पृहा ॥३॥
साधुसाध्व्य श्राद्धश्राद्ध्यश्चतुर्धासङ्घसङ्गमहा ।
आद्यन्तयामयोर्नित्य, योजनानुगदेशना ॥४॥
देशका द्विविधे धर्म, जिननामप्रभावत ।
चत्वारोऽतिशया जाते सुरसार्योनर्निर्गति ॥५॥
कैवल्ये स्वैकादशैव, चतुस्त्रिंशत सदाऽर्हताम् ।
मायाविनो न तान् धर्तु-मीशास्तादृशरूपिण ॥६॥
शक्रादिभि कृता पूजा, प्रातिहार्याष्टकैर्दधु ।
अयोगिता गता मुक्ता, जन्ममृत्युरुजाऽन्तकै ॥७॥
सिद्धि विना गतिर्नान्या, सदा कैवल्यचित्सुखा ।
मनभक्षकवात्स्य, भक्षका स्थिरताश्रिता ॥८॥

न व्यक्तिपूज्यतावादा, न भक्ताधीनतत्पराः ।
गुणलभ्यपदोद्देशा, भव्योद्धारपथोद्धुराः ॥९॥

भक्तिर्गौणा गुणा मुख्या, येषां निर्मलशासने ।
सङ्घः पापपरावर्ती, सिद्धान्तः सिद्धिसाधकः ॥१०॥

भावप्राप्यफलाऽऽलापा, निग्रहाऽनुग्रहोज्झिताः ।
सर्वस्वातन्त्र्यमार्गस्य, यथार्हं देशका भुवि ॥११॥

नायुधैर्न च क्रोधाद्यै-रमीषां दूषिताऽऽकृतिः ।
आत्माऽऽदर्शधरा मूर्ति-र्हेतुस्त्यागधियोऽमल· ॥१२॥

यस्याऽऽज्ञाराधना मुक्ते-र्हेतुस्तद्गुणसंश्रया ।
भक्तिः श्रेष्ठतमा सानु-रागा त्यागे तदीयके ॥१३॥

अमर्त्यमर्त्यसम्पत्त्योः, श्वभ्रितिर्यग्गताऽऽपदाम् ।
विधातृत्वेन लोकानां, न मृषावञ्चनापराः ॥१४॥

जगद्विधानस्थैर्यान्तै-र्भापका न भवाङ्गिनाम् ।
यथाकर्म फलं प्राहु-रङ्गिनां हितकामुकाः ॥१५॥

एवंविधान् विविधभावमयाञ्जिनेशान्,
मन्येत यो विहितदानदयोद्यमश्च ।
हित्वाऽपरान् कुपथगामिन आप्तिवन्ध्यान्,
जैनः स एव ननु मुक्तिपदप्रधानः ॥१६॥

इति प्रथमोऽध्यायः ।

## । द्वितीयोऽध्याय । (सिद्धाधिकार)

सिद्धान् सिद्धगुणान् समग्रजगत प्रान्तस्थितान् सादिमाद्
अधर्नस्थानगतान निहत्य निखिलान् समारपातप्रदान् ।
मूलात कमचयान्निजात्मगुणतो लब्ध्वाऽमिता सम्पद,
न्प्रान्तैकभुव शिवाध्ववहने वन्दत्त देघरवधी ॥१॥

समस्तजीवा अमितादिकाला-न्निगोन्वासे व्यवहारवर्जिते ।
कश्चित्ततो याति यदानुकूला, सलोकभाजा भवितव्यताऽऽत्मन ॥२॥

भूम्यादिभावान् पृथगात्मसस्थान् प्राप्तो भवेत् स व्यवहारभाक् स्यात् ।
तत्राऽस्थन तान् परिवर्तकालान्, बालो भवेत् क्षुद्रभवाभिनन्दी ॥३॥

पुण्यादिहेतुष्वपि कालहेतो, प्रधानभावाच्चरम स यायात् ।
आवर्तमङ्गी शिवधामसङ्ग, तदैव नान्यत्र पुन स्पृहेत ॥४॥

स्वतोऽन्यतो वा यदि भव्यभाव, पक्वो भवेन्मार्गमनुश्रयन् य ।
सन्धवृत्तेरनुकारभान, भवेत पर मोहमबन्धयन् स ॥५॥

सदागमाऽऽश्लिष्टमन प्रबन्धो, मान्याञ्जिनार्गीन् मनुते प्रसन्न ।
प्रशसको नैव भवाश्रिताना, विरक्तचित्तो भवभावमीते ॥६॥

जिनेश्वराज्ञामनिदन् श्रयेत स, सेवेत दनान् सुगुरून सुधर्मान् ।
भ्रष्टोऽप्यरण्ये ननु याति मार्ग, सुन्गकोक्ते- शुभभाग्निजीवन ॥७॥

मार्गोन्मुख सन्मतिमुज्झिताघो, यदाऽर्धमावर्तमशोपयत स ।
वज्रोपमाऽपूर्वमपूर्वमाप्य, ग्रन्थि विभिन्द्यात् खलु पापराशे ॥८॥

सिद्ध यथा मौक्तिकमेत्य पङ्क, नाविद्धमेन क्षतपापराशि ।
कदापि नेदृग् भविता निगोद, गतोऽपि भद्रस्य परात् प्रभावात् ॥९॥

विभिद्य मिथ्यात्वमनन्तमूलं, द्वितीयभावेन भवेत्तृतीये।
सम्यक्त्वसम्पत्तिसहो लभेता-ऽऽस्तिक्यादियुक्तं हि गुणे तुरीये॥१०॥

जीवादिमर्थं मनुते कथञ्चि-दस्तित्वनित्यत्वगुणं प्रमेयम्।
तथैव कर्ताऽनुभवी भवाब्धौ, स्वकर्मणां सद्व्यवहारदृष्ट्या ॥११॥

भव्यत्वपाके शिवसाधनानि, सद्दर्शनज्ञानयमानुपैति।
समग्रकर्मक्षयजातशुद्धि-र्निर्वाणमेति प्रगुणाऽऽत्मभावः ॥१२॥

आस्तिक्यमेष्वेत्य द्विधा दयायां, प्रवृत्तवीर्यो भवभावभीरुः।
सनातने धाम्नि सदा रतः स, कषायवान्नैव जिनादितत्त्वे ॥१३॥

महाव्रताकाङ्क्ष उदग्रवीर्या-भावाद् भवेत् कोऽपि गृहिव्रतोत्कः।
अभ्यस्तशिक्षः श्रमणत्वमेति, विहाय हिंसादिभवाऽऽश्रवान् सः ॥१४॥

मोहक्षयायोद्यत आप्तवीर्य-श्रेण्या समस्तं विनिकाश्य मोहम्।
स केवलीभूय सयोगभावो, जिनोऽपि कश्चिद् भवतीह जीवः॥१५॥

तीर्थं विधायैति स चापलेश्य-मयोगमेषोऽपि लभेत सिद्धिम्।
भेदा यतः पञ्चदश प्रसिद्धा, अनन्तरं सिद्धिपदं गतेषु ॥१६॥

एवं दुर्दान्तकर्मक्षपणकविधया लब्धसिद्धस्वभावा,
नोच्छिन्ना ज्ञानशून्या न च भवजनना निग्रहानुग्रहाकाः।

शश्वत्स्थानस्थिताश्चित्सुखततिकलिता भव्यजीवावलम्बा,
ये सिद्धास्तान् सदा यो मनुत उदययुग् देवभावेन जैनः ॥१६॥

इति द्वितीयोऽध्यायः।

## । तृतीयोऽध्यायः । ( आचार्याधिकारः )

वन्देताऽऽचार्यवर्यान् सुगुरुपरम्परान् मोक्षमार्गैकलीना–
स्तीर्थेशैस्तुल्यरूपान् प्रवचनशकटोद्वाहकान् गच्छनाथान् ।
सूत्रार्थोद्देशकर्तॄन् प्रवरपटुमतीन् ग्रान्दिवान्कितानान्,
नित्यं तीर्थस्य सारां निर्मथत उदयाकाङ्क्षुरात्मा य स जैनः ॥१॥

गते तीर्थनाथे समस्तज्ञभावैः, शिवं यो वहेत् तीर्थभारं नितान्तम् ।
यथाऽस्तंगते वासरेशे निशेशे, प्रदीपो जगत्यां पदार्थप्रभासी ॥२॥

जिना जीवितान्तं वहन्त्येव तीर्थं, सुतीर्थं तथान्येत इहोद्दिता नो ।
अथोद्घातकास्तीर्थरूपा मुनीशा, मता शासनं धारयन्ते सदीशा ॥३॥

जिनेशः शिवाध्वा समस्ताङ्गिसाम्ने, सभायां पुरः स्थापितो दीपमुक्तः ।
मुनीनां शुचिज्ञानकाणां परं तं, सदा सूरिवर्या वहन्ते प्रकामम् ॥४॥

धृताथा यथा सार्थवाहो जनानां, सुतप्त्याऽध्वनि ग्रामविनाथनानाम् ।
तथा सूरिवर्याः सुमुक्षिप्रधानान्, निनार्याऽऽपन्ने मोक्षमार्गं नयन्ति ॥५॥

यथा तीर्थनाथान् समाराध्य सद्दृग्–गणस्य भवे तीर्थनाथस्तृतीये ।
तथा सूरिवर्यान् समाराध्य जन्तुस्तृतीये भवे तीर्थनाथत्वभाक् स्यात् ॥

जिनेशा भवेयुर्यथाऽऽशातिता द्राग्, भवानन्त्यमिथ्यात्वदानैकदक्षाः ।
मुनीशास्तथैवेत्यवजानते नो, जिनेनाध्वमन्तारं इहाऽसलाभा ॥७॥

परं सूत्रमल्पं यदाऽसौ निलुम्पेद्, भवानन्त्यमेतीह हित्वा सुदृष्टिम् ।
यदा तु प्रकाशेत सम्यक्तया तत्, स शास्त्रेण गीतः सुसारैर्वरिष्ठः ॥८॥

सुशिक्षां समस्तैन उद्घातदक्षां गृहीत्वा गुरोः पापहन्त्रीं सुशिक्षाम् ।
समभ्यस्य सूत्रार्थयुग्मं समेत्य, स्वपरस्थापना सम्मतत्वापन्नो प्राग् ॥९॥

द्वादशाब्दी गुरूपास्ते-रधीत्याऽऽगमसञ्चयम् ।
कालं तावन्तमेवार्थ, भवेन् सूत्रार्थयुग्मवित ॥१०॥

विहारयेत् सूरिवरस्तमार्य्यं, साधोर्युगं देशविदेशभागम् ।
मुण्डेत् प्रतीच्छेच्च बहून् मुनीन् स,
विद्याच्च भाषां विविधां जनानाम् ॥११॥

जिनेशजन्मव्रतकेवलान्त-कृद्भूमिमेक्ष्याऽमलदर्शनाढ्यः ।
ज्ञात्वा पदार्ह मुनिनाथवर्याः, पदेऽभिसिञ्चन्ति सहानगारैः ॥१२॥

सबालवृद्धे गण ईश एष, द्रव्यैर्गुणैः सत्परिवर्त्तनैः सह ।
पाल्येत तेनापि जिनानुकारं, तोष्येत तेनार्थपदानि दत्त्वा ॥१३॥

सूरीन्द्रपट्टस्य यथावदाहृतौ, भवेज्जिनः सज्जनुषां तृतीये ।
पञ्चाऽतिशेषा मुनिसार्थपेऽस्मिन्, स्वप्नेऽपि नेमेऽन्यमुनीश्वराणाम्॥१४॥

आत्मर्णमोक्षं परिवाचयन् गणं, यथा विधत्ते सुगुणांस्तु शिष्यान्।
निष्पाद्य पट्टे प्रतिभासमानान्, विधाय कार्योऽन्तगतः समाधिः॥१५॥

एवंविधान् गणधरान् विविधप्रकृत्या,
भक्त्या समर्च्य गुणगाननिबद्धलक्षः ।
आज्ञाधरो भवति दासनिकृष्टरूपो,
जैनः स एव जिनशास्त्रधरैः प्रगीतः ॥१६॥

इति तृतीयोऽध्यायः ।

। चतुर्थोऽध्याय । ( उपाध्यायाधिकार )

नमेदुपाध्यायपदान्वितान् गुरु–नाचार्यपट्टस्य यथर्हरूपा ।
क्वचिद् द्वये भिन्नतमा कचिन्नो, पदद्वय धार्यतेऽपि कश्चित ॥१॥
गच्छस्य तप्ति निखिला विदध्यु–राचार्यनिर्युक्तिधरा यतोऽमी ।
प्रवर्तक सस्थविर गणाव–च्छेद गणि चापि नियोजयन्ति ॥२॥
धन्या मुनीन्द्रा इव साधुवर्य –पर्यायत स्युयदि वा विहीना ।
पञ्चातिशेषा अपि सन्त्यमीषा, गणेशवत सर्वकरा गणस्य ॥३॥
ध्याप्येत सस्या धुर्गवेषिणा विदा, साध्य च तस्या कचित्तनराणाम् ।
ध्याप्येत चित्त न तथापि तस्या, फल तत्सञ्चालनमन्तरेण ॥४॥
सञ्चालना मतिमान्क्रियाणा, सौन्यमिद्धया फलमाप्यतेऽस्या ।
अशिक्षिताभ्यस्तकला न तस्या, फल लभेयु स्पृहयालवोऽपि ॥ ॥
छात्रा यथा साधुवरा जिनेशा–श्रितेऽत्र धर्म वरवाचकान्ते ।
मत्र नियायुक्तमुदारभावा, सम्पादयन्तीष्टफलाय तानिव ॥६॥
नृपा यथा कोशसमृद्धभावा, भ्रान्त आत्मान्यविभासनोगना ।
अङ्गादिसत्रागमरत्नधारी, जनान्यविशेषु स वाचक स्यात ॥७॥
विनयविनीत सतत स्वशिष्या विना प्रमाद परिशील्ते य ।
स्वाध्यायलीनो गतमत्तभाव, स्वध्यत्यसौ वाचक आगमेषु ॥८॥
दु खानि सौख्येन युतानि निम्न, आख्याय सुस्थो भवतीह तद्वद्
मुनीश्वरेभ्यो जिनशास्त्रमह, समर्प्य तुष्टिवरवाचकस्य ॥९॥
एकादशाऽऽचारमुखान्युपाङ्गा–न्यपातिकादीनि दश द्वये च ।
पञ्चोक्तसूत्री त्रय पीठकानि, मूल चतुष्क धर्तोडवुद्धि ॥१०॥

राष्ट्रस्य भारमखिलं प्रजयाऽऽर्यतीक्ष्णो-
ऽमात्यो यथा वहति भूतिकरो नृपाणाम्।
श्रीवाचकेन्द्रविततास्त्रिलगच्छसारः,
सच्छासनेन जयमेति मुनीश्वर्यः ॥११॥
रत्नानि राजकुललब्धमहांसि जातेः,
शम्यानि ते यदि भवन्ति गुणान्वितानि।
जीवादिसार्थवहनानि पदानि सन्ति,
श्रीवाचकान्तिक उदारतराणि सूत्रैः ॥१२॥
सत्रानुयोगकृतिषु प्रवराः पतन्ति,
पादेषु विघ्नविजयाय कृतज्ञताये।
बुद्ध्वा जिनेश्वरमुनीश्वरसङ्गतेषु,
वंशस्य वाचकततेरपि शुद्धि ( शास्त्र ) सिद्ध्यै ॥१३॥
अनुयोगधराः परमेष्ठिपदे, विधिसिद्धपदान प्रणमन्ति मुदा,
अनुयोग इहास्ति जिनेशततो, वरिवर्तति दक्षिणतो भरते।
अनुयोग इह गुरुस्कन्दिलसन्मुनिपान्तिषदा समसूत्रगतः,
नागार्जुनसूरिवरेण ततो नमति श्रद्धावलिकः सुजनः ॥१४॥
शुभवाचकवंशगता मुनिपा, विदिता जगति स्वाति (सूरि) प्रमुखाः,
वरनन्दिकरोऽपि च नन्दिकरो, वरवाचकदेव इहैव मतः।
आवश्यकमादिमतं मुनिपै-रुद्देशमुखत्रितये क्रमतो,
नन्दिः पुनरध्ययनीयपदं, सकलेऽप्यनुयोगविधौ यमिनाम् ॥१५॥
यथा मुनीशः सकलेऽपि शास्त्रे, बिभर्ति मुख्यत्वमसमानमाश्रितः।
तथैव मुख्याः खलु वाचकेन्द्रा-स्ततो भवेज्जैनवरो नतस्तान् ॥१६॥

इति चतुर्थोऽध्यायः।

---

। पञ्चमोऽध्याय । ( साध्वधिकार )

वन्देत साधुगणमुत्तमसत्त्ववन्त,
त्यात प्रभू सहजनि ल्लना तनूजम् ।
राष्ट्र सुराज्यममितोत्सवृद्धिहेतु
ज्ञातेयमर्थनिचय च जहौ स वीर ॥१॥

भ्रान्ति भवेषु जननान्तकभारभुग्ना,
नि सत्त्वमाग्गरणामनिवार्यरूपाम् ।
ज्ञात्वा शरण्यमरहत्कथित सुधर्म,
पाप समग्रमधम परिहृत्य न्धे ॥२॥

सम्यक्त्वबोधचरणानि शिवकहेतो,
सावद्ययोगनिरमेण युतानि धृत्वा ।
सावद्ययोगनिरतात् सुगुरोश्च यात-
ज्जीव नमार नमधा शिरसा नमेन्तु ॥३॥

अर्थोपाजनमुज्झित निरतितो, मूर्च्छापगत सोऽस्तिमाँ-
स्त्यक्त पापपरायणैकमहितो वैद्रात्तचित्तोद्धर ।
जायन्तेऽघचया, निलीनमवते धमस्य चेतनात्क्षण,
सन्नात्तत्रिगुप्त शान्तमनसाऽसङ्गोऽभवज्ज्ञानवान् ॥४॥

सम्मूर्च्छिमाऽमितमनुष्यविनाशहेतु,
पञ्चाक्षगर्भजनरा नवलक्षमाना ।
हृ यन्त्व स्मृतनर्गमिथुनेऽत्र तस्मात्,
तत्त्याज योषिन्यन सकलाघशान्त्यै ॥५॥

प्राणा धन व्यवहृतौ नियतोपमाना,
सोढु न शक्यमपहारकृत हि तद्धि ।

मत्वेत्यसौ परिहरेद् ग्रहधारणार्हं,
सर्वं नदत्त ( ह्यदत्त ) मपि वस्तु समस्तयोगैः ॥६॥

भूतादिनिह्नवमुखं विजहात्यसत्यं,
संसारसागरमनन्तमुपेत्यमुष्मान ।
पापप्रधानमखिलाऽऽगमनिन्द्यरूपं,
नैवाद्रियेत शिवसौख्यमनाः कदापि ॥७॥

सर्वाण्यघानि कणशोऽपहृतौ पटूनि,
कार्याणि सम्प्रतिकराणि विशुद्धमन्ति ।
मुक्त्वैकमार्ग उदितं जनुषां विनाशे,
तत्याज तत् परवधं त्रिविधं त्रिधा यः ( ऽसौ ) ॥८॥

हिंसादीनां यमोऽसौ प्रतिकलमुदयी मातृष्वष्टासु चेत स्या-
द्रक्ष्यास्ता नैव यामाशनकमनवता ध्यानपाठौ भवेताम् ।
नैवैवं सर्वसङ्घं प्रतिदिनमविता सुष्ठुवर्त्मानुवर्त्ती,
यावज्जीवं च शुद्धं प्रतिवहति महद्यामममागतुं शिवं सः ॥९॥

सुकराणि भवेयुरिमानि जने, श्रुतवाक्यमनुश्रयता सुधिया ।
व्रतषट्कतया गदितानि बुधै-र्यदि रक्षति जीव (भिदां षट्कं)
चयान् सततम् ॥१०॥

निखिलव्रतिनां हृदयं ह्यवने-ऽसुमतां प्रतिपत्तिरिहास्तिमताम् ।
नहि शक्यत एतदनक्षजये, विरतो यतिसार्थ इतोऽक्षजये ॥११॥

न बुधोऽलसयोगयुतोऽध्ययनी, न विरुद्धसमागमहेतुधरः ।
श्रमणत्वमनुत्तममायतते, तदकल्यमसौ विजहाति सदा ॥१२॥

स्वय साधन चेत्र शुद्ध ददाति, परो हिंसनादि प्रकुर्यात्तदर्थम्।
स्वकीयेतरे नास्ति भेदो वधे(ध)न—स्त्यार्थासनादि व्रती त्यक्तुमह॥८३॥

भवेद्यत् व्रताना मुनीना च यत्ना—द्धत वस्त्रपात्रानुग्राहक तत।
यदेतैव हिंसापरीहारहतो, पत्यङ्कमुख्य मुनिगट् तु, किञ्चित्॥८४॥

वद्वियथाऽगारयता तु सेवा, सुरगाप्तये तद्वदगारिनिश्रा।
मत्वेति नैवानसन गृहपु, चरन्तिमाश्रसुरगप्तिहत्तु ॥१५॥

साधन यन्पि नाप्यते यहि, पापक मुनिपदकचारित।
अन्तर करोति पापसङ्गम, साधन त्यजेत्तनोर्विन्न यूपम् ॥१६॥

विपाकतोऽघमन्ततेर्निवत्ततेऽघसाधनात,
शरीरसक्रियात एनमा पन विनिश्चयान्।
विदन्निति स्वकमभेन्ममयन्नो मुनि—
श्कर्म मन्दधाति सत्सु सयमाध्ययापनम् ॥१७॥

एवनिधान् मुनिरगनशनात्सुवस्त्र—
पात्रौपधानि विधिना प्रतिलम्भयन् म।
दनार्चनादिनिरत परमेष्ठिमच,
स्यात्रैन एव करुणानिधिराप्तमार्ग ॥१८॥

इति पञ्चमोऽध्याय।

---

। षष्ठोऽध्याय। (दानाधिकार)

महिता एवा ध्याता सिद्धा यनाग उपासिता,
निदिता सेवा याचरपदयोर्मुनीन्पदोचिता।

मुक्तेरिच्छा चेन्न स्वान्तेऽखिलं मृतमण्डनं,
विदिताऽस्यान्तः सत्सम्यक्त्वः सुजैन उदीरितः ॥१॥

आगमवाचो यस्य श्रोत्रैः श्रुत्वा शिवकामना,
स्यादुत्कृष्टा भवभयभीतिर्हदीष्टपदाप्तये ।
साधनमस्या गुरुकुलसेवाविधित्सया वर्तनं,
विघ्नापेतं विज्ञोपचितं देवार्चनमादृतम् ॥२॥

पक्वे भावे भव्यत्वस्याऽसमे सुखदायिनि,
भित्त्वा ग्रन्थि कश्चिल्लभते भवी शुभभावनः ।
यल्लब्ध्वा स्यात् परिमितभूतिर्नरः शिववर्त्मगः,
पतितं न स्यात् सत्सम्यक्त्वं कदापि निरन्वयम् ॥३॥

मत्तो विज्ञो मूर्खैः सदृग् योगत्रिककार्यतोऽ-
पगते विमदे विज्ञो विज्ञो न वै जडतान्वितः ।
भ्रष्टो दृष्टेः कालमनन्तं निगोदमुपाश्नुते,
प्राप्ते भावे सत्सम्यक्त्वं ध्रुवं धरतीप्सितम् ॥४॥

वर्त्मभ्रष्टः सद्भाग्यः स्याच्छुभेऽध्वनि विश्वसी,
देशकवाण्या इतरस्त्वितरे न चाद्भुतमत्र हि ।
सम्यक्त्वी स्याज्जिनमार्गोक्तौ न परत्र कदापि हि,
विश्रम्भोत्को नित्यं मिथ्यामतिः पुनरत्र न ॥५॥

लब्ध्वाप्येतद्योगात् कुगुरोः श्रद्धाधनवञ्चितः,
अज्ञानाद्वा हीनः स्याद्वाऽन्यथाऽनृतबोधताम् ।
चेयं धर्मं जैनाचीर्णं चरन्नपि धिक्कृतो,
हेयः सुधिया मार्गे विघ्नैः समो जिनधर्मिभिः ॥६॥

योऽग्रान्शभिन्नायुक्ता अनोघसम पुन ,
स्त्रीशास्त्राश्रैयुक्ता शुद्रा धरन्ति भगप्रणाम् ।
नेते दया सार्थारम्भा न चापि गुण पण,
हिंसाद्यात्मा धमो नैवाश्रिते ऽशमुज्वलाम्          ॥७॥

स्यात् सम्यक्त्व पञ्चविभञ्च मुखं ह्युपशान्तिन,
घटिकायुग्म सप्तप्रकृतीर्निनाश्य पर पुन ।
क्षायिकमितरन्मिश्र मिश्रान् षडावलिका पर,
सास्वाद स्याद् वदकमन्ते मिश्रान् परमीरितम्          ॥८॥

जैन वचन श्रद्धत्ते यद् विजयजिनर्चित,
गतमिथ्यात्व स्याद् द्रव्येण सम्यक्त्वयुतोऽसुमान् ।
द्वारैं सत सत्त्वादीना मत्वा न्ढभावतो,
भावात्तस्य स्यात सम्यक्त्व कण्ठाग्रहनिर्गत          ॥९॥

प्रत्यक्ष तत्सम्यक्त्व स्यान्तीन्द्रियवेदिनो,
लभ्य बुद्धेगरितकार्य स्वमात्मगतीप्सितम् ।
जीवेऽन्यस्मिन् शुश्रूषायै प्रमीयत आस्रात,
नैव धर्माधर्मोद्यान भवाभवेवेदिन          ॥१० ॥

पञ्चध्या युक्त सप्तमिरशै मन श्रुतिहेतुक,
निश्चयपक्षेऽ मत स्यात्तत प्रणमादिभि ।
चिह्नरिद्धे पक्षेऽन्यस्मिन युत विरलैरपि,
प्राप्ते तस्मिन् स्याद्यामाना कृतिस्मूचिता मताम्          ॥११॥

नान्ये धर्मा षोढा जीवान् कदापि तु मन्वते
हिंसा तेषा तीर्थ युक्ता स्थिरेतरजीवगा ।

तत्तस्मिन् स्याद्धिंसानियमो न वै परमार्थतः,
सत्याद्यान्यप्येवं तेषां ततो व्रतमार्हतम् ॥१२॥

जीवाजीवौ विश्वे सत्तां सदा धरतोऽन्वयात,
हेया ग्राह्याः के केऽत्रेति प्रधारणसंविदि।
तत्त्वानि स्युः सप्तेत्यत्र प्रसाधनबाधने,
पुण्यापुण्ये क्षिप्ते मान्यान्युदाहरतो नव ॥१३॥

एतद्यो धरतेऽसुमान् दृढमतिः स्वप्नेऽपि नान्यान् सुरान्,
धर्मास्तद्वत आदरेण मनुते संसारगर्तागतान्।
सर्वत्रेक्षत ईप्सितार्पणकरं जैनेन्द्रधर्मादरं,
सोऽवश्यं शिवमश्नुतेऽत्र यदि वा जन्मान्तरे निश्चितम् ॥१४॥

अनन्तशो ग्रैव्यभवानवाप, महाव्रतानां धरणप्रभावात्।
न प्राप पारं यदसौ स एव, लब्ध्वाऽद एतीह प्रभावतोऽस्य ॥१५॥

लोके यथाऽऽश्वासपदं हितेच्छा, मुमुक्षता धर्मधरे तथैव।
सम्यक्त्वरूपा निरघा न चेन सा, सर्वोऽपि धर्मो लवणाम्बुसेकः॥१६॥

एतल्लब्ध्वा वमति यदपि प्राश्नुते मोक्षमाशु,
बीजं क्षेत्रे फलति रुचिरे योग्यकालेन सम्यक्।
सामग्र्यां तु प्रभवति न फलं बीजशून्यं हि जातु,
ज्ञात्वैतत् स्याज्जिनवचनरतो यः स जैनो न चान्यः ॥१७॥

इति षष्ठोऽध्यायः।

---

एकाक्षतामधिगतः पृथिवीमुखेषु,
भ्राम्यन् प्रकर्षमयते तनुजातवुद्धेः ।
जिह्वादिजातमयतेऽथ विवोधभावं,
प्राप्य प्रकर्षनियतं विकलाक्षभावम् ॥६॥

क्रमोऽयमुत्क्रान्तिगतोऽसुमत्सु, ततो मतेर्भित्सु मतोऽयमुत्क्रमः ।
सञ्ज्ञी मनोलब्धिमुपाश्रितोऽक्षै, स्वैः पञ्चभिर्युक्त उदित्वरः स्यात् ॥

स्ववुद्धबोधाय परैः प्रयुक्ता, वाणी पदार्थव्यवहारहेतोः ।
श्रुतं ततस्तत्त्वत ईरितं वरं, शिवादिवुद्ध्यै भविनां जिनेन ॥८॥

ज्ञात्वा तदुक्तं परमार्थवुद्धं, तीर्थ्याः परे तत् स्वकशासने जगुः ।
अज्ञानवन्तोऽप्यनुकारदक्षा-स्तल्लौकिकं गोचरतीतरूपम् ॥९॥

लब्धे द्वयेऽस्मिन् सुगुणे भवेद्धि, त्रयं समक्षं न विना कदापि ।
त्रयं ह्यवध्यादि क्रमाद्धि लभ्यं, न केवलादस्ति परो हि बोधः ॥१०॥

अरूपिवोधान्न परोऽस्ति वोधो, द्रव्याध्वकालाः सहिताः स्वभावैः ।
ज्ञात्वा समस्तान् प्रतिबोधयोग्या-नाख्यन् गणिभ्यः श्रुतमुक्तमर्हन् ॥११॥

श्रोता(त्रा)नुगुण्येन विभक्तमार्हतै-र्द्वयं प्रमाणं तु पुरा समूहितम् ।
मत्यादि पूज्यैः परबोधधर्मै-र्यथैव वुध्येत तथैव वाच्यम् ॥१२॥

ज्ञप्तिर्विमुक्तेषु न युक्तियाभि-र्ज्ञानत्वरूपेण तदेव तेषाम् ।
फलं ह्युपेक्षा भवकेवलानां, मत्यादिवोधेषु फलं ग्रहादि ॥१३॥

जीवादितत्त्वार्थमतिः प्रशस्या, हानाऽऽत्त्युपेक्षाभिरयेत् प्रबोधम् ।
यतः प्रवृत्तो दुरितं न वध्याद्, यतो भवेत् साधुमतेरसूनाम् ॥१४॥

अङ्गोपाङ्गादिरूपं वहुविधमुदितं सच्छ्रुतं श्रीजिनाद्यै-
स्तीर्थस्याधारभूतं श्रुतधर उदितस्तीर्थरूपो हि शास्त्रम् ।

आचारेपु स्थितात्मा निधिनन्वगतिं यत्त ईप्टेऽप्यनिप्टे,
तस्यास्तेन्र्यस्त्प्तिर्यो भवति जगति वै सा तु मिथ्यात्वरूपा॥१५॥

आचार्यान्पिदावली गुणव्रता देयेति शास्त्रोदिति,
सयत्नाऽपि शुणेपु तत्र गदिता कापा त्वपानादिनी।
सा जैनात्र पर श्रुतार्थधरणे, साऽऽवश्यकी धारणा,
ज्ञात्वैतत्त परमार्थशास्त्रविजयी जैनो भवेत् सर्वत्र ॥१६॥

इति सप्तमोऽध्याय ।

---

। अष्टमोऽध्याय । (चारित्राधिकार)

जैन स्यात् पापभीरुस्तत इह मनुते पापमुक्तान् मुनीशान्,
यो यत्र प्राप्तमोदो भवति गुणपरेऽसौ ह्यवश्य पर तत्।
एवेतिज्ञातशास्त्रो गुणगणरहितोऽप्यर्चतीष्टान् मुनीन्द्रान्,
शास्त्रे जैनेऽत्र तस्मात्प्रचतिविरता माननीया परेण ॥१॥

अनास्तितोऽसुमानय चिनोति कर्मसन्ततिं,
शुभाशुभप्रयोगतोऽनताच सर्वदा भवे ।
निबुध्य तद्विरामभावसाधना श्रिय पर,
श्रयेन्मुनिश्चरित्रभाक् शिवाप्तिसाध्यचेतन ॥२॥

चारित्र हि तदेव यत परिहरेद्दुष्टा क्रिया सवथा,
शिष्टा योगसमुच्चये न वृणुते या या क्रियास्ता सदा।
रुद्ध्वा त्वाश्रवद्वारसञ्चयममौ सन्निर्जरायुग् व्रती,
स्यात्तीव्रोग्रमदान्तमानसरुचि तद्वान् श्रिये स्वान्ययो ॥३॥

चारित्रमाहत्य जिनाः समस्ता, उपार्जयामासुरुदग्ररूपम् ।
सत्केवलं, तीर्थनिवर्त्तनां तत-श्चक्रुस्तथैवाहतमुक्तिभावाः ॥४॥

मुक्तेर्हि मार्गः प्रवरं चरित्रं, स्वलिङ्गमेतद्धि शिवाङ्गमग्र्यम् ।
जिना न गृह्यन्यदशास्ततः स्व-लिङ्गेन सिद्धिः समुत्सर्गमार्गः ॥५॥

पथि स्खलन्तं वरसेवधीशं, दृष्ट्वा न चक्रे स्खलनानि कश्चिन् ।
न यत् स मार्गो निधिलाभसिद्ध-स्तथैव गृह्यन्यदशे विमुक्तेः ॥६॥

पापेभ्यो विरता भवन्ति पशवः सङ्ख्यामतीताः परं,
सर्वेभ्यो न परां चरित्रपदवीमापूर्यतस्तत्र नो ।
इच्छाकारमुखा शुभानुगदिता शास्त्रे यतीनां सदा,
सामाचार्युपपादनं नरभवे तस्या भवेन्निश्चितम् ॥७॥

यत् प्रोच्यते जिनवरैर्गदितेऽत्र शास्त्रे,
सच्छासनं प्रवचनं च सुधावहाभम् ।
चारित्रमेव न परं जिनपाः समांस्तद्,
रक्तान् विधित्सव इदं पदमाप्नुवन्ति ॥८॥

ईर्याद्या विबुधैर्मताः प्रवचने या मातरोऽष्टौ तका-
श्चारित्रं जनयन्ति पोषणमलङ्कुर्वन्ति तद्वोचरम् ।
जातं पुष्टमभिश्रयन्ति चरणं ताः सर्वदा पालनां,
मातं सच्चरणं तदत्र गदिताः सत्यास्तका मातरः ॥९॥

पापाश्रयाणां विरतेश्चरित्र, भवेद्यदि स्यादपयोगवृत्तिः ।
समुद्रवर्ती चरणी हि तिर्यक्, तद्वान्न कायादिमतां सुवृत्तेः ॥१०॥

ज्ञानं सज्ज्ञानरूपं विरतियुतमलं नान्यथा तेन युक्ता,
मिथ्यात्वेऽज्ञानमात्रा सदसदुभयगा नेह बुद्धिश्च भोगात् ।

ज्ञानस्याप्तं मदद फलमभिलषित सच्चरित्र नराणा,
ज्ञात्वेद मा भवन्तु प्रवरगुणधरा सच्चरित्रेण हीना ॥२२॥
श्रामण्यपर्यायमधिश्रिता या, सुखासिकोक्ता परिवर्धमाना।
मासक्रमेणोपरता तु वर्षात, तका न नोधैकरतोऽश्नुते वै ॥१२॥
ज्ञान तु दर्शनयुत त्रितये गतीना,
नैवास्ति तत्र परम फलमिद्धरूपम्।
मानुष्यके नियतमेतत्प्राप्यते त-
न्नोनश्चरित्रमहिमा जिनमागसार ॥२३॥
यद्यपि सवरभेदत्तयेन, चरण गन्ति तदपि तपस्तत्।
अधिसहन तत्प्रतिपन्मत्र, केवलमेव न सद् विरतिर्नु ॥२४॥
गोत्र नीचमपैति यच्चरणतो वन्धो भवेदुच्चकै,
प्राप्तौ तस्य गवोपम जनततेर्मान्यत्वमभ्यागतम्।
रङ्कोऽप्यस्य यत्नादरात्तुलयति स्व चक्रिणा सन्तत,
गोत्र प्राक्तनमथच्छन्न हि भवेच्चारित्रलक्ष्म्यावृते ॥२५॥
तीर्थस्यातुल एष ऊर्जिततरो गीत प्रभावोऽसमो,
यत्सत्वाऽप्यधिकारयाञ्जिनपदेऽस्याऽऽराधनाया स्फुटम्।
एषोऽह जिनतामवाप रुचिरा तस्मै नतिस्तत्प्रति,
तीर्थं तच्चरणान्वितो मुनिगण शेषास्तमेवाश्रिता ॥२६॥
लोकानुभावजनित चरणे महत्त्व,
ज्ञान चतुर्थमुपयाति विना न यत्तत्।
लोकेश्वरा अपि लभन्त उपेत्य चारु,
व्रतत्समाचरतु जैनवर सदा तत् ॥२७॥

इति अष्टमोऽध्याय।

---

। नवमोऽध्यायः । ( तपोऽधिकारः )

ज्ञाता जीवा अजीवाः परिहृत उदितस्त्वाश्रवाणां समूहः,
साधित्वा संवरांस्तं नवतरमरुणद् बन्धमार्हन्त्यलीनः ।
यावन्मोक्षं प्रयातुं हृदयमभिसरत्यन्तरा कर्मजालं,
प्राग्बद्धं विद्रवेन्मां न खलु मयि तपस्तत्क्षयार्हं यदि स्यात् ॥१॥

जीवोऽस्ति नैव, नहि यः क्षपयेदघानि,
कर्माणवो यदुदयं सततं प्रयान्ति ।
निर्जीर्यतेऽवमुदितं भविनां मता सा–
ऽकामा, न सा खलु शुभायतिराप्तमार्गे ॥२॥

तत्रापि योऽल्पमुपचित्य बहु क्षिणोति,
सोऽभ्येति कर्मलघुताप्रभवां सुरूपाम् ।
काष्ठां ततः क्रमगतां तु यथाप्रवृत्तां,
लब्ध्वाऽपि तां शममुपैत्यसुमान् कदाचित् ॥३॥

लब्धे शमे परत आचरतीह कश्चित्,
शुद्धेः पदं तप इहात्मसुवर्णशुद्ध्यै ।
अत्रैव सा भवति कामयुता प्रशस्या,
सन्निर्जराऽव्ययपदार्पणसाध्यरूपा ॥४॥

भृगुप्रपातादिकमाचरन्तो, दृश्यन्त उद्धारहृदो भवाब्धेः ।
प्रेत्यास्ति नैवाश्रयणं त्वमीषां, कुबोधजं बालनिमग्नचेतसाम् ॥५॥

उदाहृतं बालतपः शमादेः, प्राप्तौ बुधैर्हेतुतया यदत्र ।
तदुत्सवादिरिव साधनाप्तौ, क्षमं भवेऽनन्तश आदृतं यत् ॥६॥

तपो भवन्तदुदारनिर्जरा सिद्ध्यै जिनोक्तान्ययसाध्युद्धया ।
सूर्यस्य सहस्रान्तय इद्धरूपा, भिदोऽस्य भान्या द्व्यधिका न्शैर ॥७॥

अनशनादिमय तप आहृत, भवति मोक्षपदाय शमात्मनाम् ।
अयनयुग्मभिदाऽस्य भिदाद्वय रवरिवाऽस्ति तपो वहिरान्तरम् ॥८॥

आद्ये पट्के पूर्वं पूर्वं, धाय साधोरादौ शक्ते ।
पूर्वं पूर्वं चान्त्ये फलद, पट्केऽन्यस्मिन्नान्तरमेतत् ॥९॥

घन प्रसक्त घूनिन नियाग्या, मिथ्याऽव्रतक्रोधमुराश्रिताऽङ्गी ।
तच्चेत् क्षयेऽन्न तपोऽन्वितेन, सुसवरणाप्यत आत्मबाधा ॥१०॥

ज्ञानान्वितो हि भगवानपवर्गसिद्धि,
जानाति निश्चयगता निजके भवित्रीम् ।
तीव्र चचार तप आत्महितैषिभावात्,
काय न जात्वकरण तप एव तद्धि ॥११॥

मोह विनाय नितरा भयभावमाप्य,
सर्वाघनाशनपरा क्षयिनीमिहाऽऽलिम् ।
प्राप्यापि येनवल्पमनुत्तमयुग्मरूप,
यावत पर तप उपैति न विमुच्यतेऽङ्गी ॥१२॥

अबोधितान्वितेन यानि जन्तुना निकाचिता-
न्यघानि तानि भस्मसात् करोत्यसौ तपो धृते ।
योऽन्तराऽकृतिर्द्विधा तनोति तादृगहसा,
विनाशमाप्यते गुणो न भेन्मन्तराऽहसाम् ॥१३॥

न चेत्तप स्याद्दहनोपमान, प्रबद्धकर्मेन्धनदाहनक्षम् ।
कथ चिरातीतकृताद्घालि, क्षियेत, मुक्ति प्रगुणेच्च साधु ॥१४॥

तपः क्षिणोति चेदघं पुरा भवार्जितं नहि,
कथं प्रमुच्यते जनः कृताहसां क्रमाद्‌ मुनेः ।
अनुद्धबोधसञ्ज्ञतिर्न कर्मनाशमन्तरा,
यथैन आत्मवीर्यजं तपा हि नान्यथा यनः ॥१५॥

ज्ञानं सर्वपदार्थसार्थगमनं यावद्भवेन केवलं,
चारित्रं विगतातिचारसुभगं यावद्यथाख्यातिकम् ।
आगच्छद्‌दुरितौघसंवृतिकरं स्थाने कपाटो यथा,
प्राक्‌चीर्णाघसमूहसक्षयकरं शुद्धं तपः पावनम् ॥१६॥

सत्यं तपोऽस्त्यसुखरूपमिदं तु किञ्चिन्,
कर्मापसारणपरे मुदितात्मताऽत्र ।
कोटया ऋणं विनयते ददताऽल्पमेव,
(जन्तुः) लाभस्ततश्च भविता वृजिनौघनाशात् ॥१७॥

सत्यं दुःखं न भवति दुरितोद्रेकशून्यं कदाचित्,
कर्माभावो मनसि समितः प्रेप्सितस्तद्धि धर्मान् ।
यावन्मोक्षो विमलनसहितो जातिमृत्योर्न जात-
स्तावत्सर्वे दधति मलिनं तत्तपो मुक्तिहेतुः ॥१८॥

यावान् कश्चिज्जगति जनितः कर्मजातः समग्रो,
नैवोत्थानं जननविगमयोः पापसङ्घं विना स्यात् ।
मन्ताऽऽपत्तेर्विलयपटुतां मन्दधात्यान्तरेऽस्याः,
कर्माणूनां विलयनपटुता सत्तपस्येव साक्षात् ॥१९॥

मोक्षो भवेद्भवभृतां समये तु यस्मिन्,
तस्मिन् भवेत् तपस एव परानुकाष्ठा ।

ल्वेऽप्यशेषगुणजात इय न यातत,
तावन्न मोक्ष इति सन्महिमाढ्यमेतत ॥२०॥

वह्वज्वाला कर्मकाष्ठालिदाहे, मेघो दैवो ज्ञानमुख्याऽऽयनह्याम् ।
ससाराण शोषणेऽगस्तिरूपो, निर्बाधार्थं सत्तपोऽस्त्युस्तरूपम् ॥२१॥

भाव शुद्धो निमलमतिमता, मानमप्यादराढ्य,
शम्य शील मदनहृतिकर वाक्पथातीतभावम् ।
वमस्यैषाऽघनिचयहरणी शुद्धगङ्गा त्रिमार्गा,
यात्रास्थान तप इह गदित सत्प्रयागाभमेतत् ॥२२॥

एवविध तप उदारधिया प्रशस्य,
मत्वा निरन्तरमिहाचति तद्व्रतो न ।
इच्छेन्नोऽप्युपरताघसमूहमग्र्य,
जन स एव ननु मोक्षपदैकलक्ष्य ॥२३॥

एव नवपदनिमला बुद्धिं धत्तेऽत्र देवभिदि युग्म,
भेदत्रयमथ सुगुरौ निर्वाणपदैकसाध्यपरम् ।
पूज्या परमपदयुता इमे सहाराधनीयता युक्ता,
धमचतुष्कयुता नवपदी मया सश्रयेत्त्वैन ॥२४॥

इति नवमोऽध्याय ।

---

। दशमोऽध्याय । (जीवाधिकार)

जागर्ति जैनत्वमनुत्तर तद्, यत्राऽस्ति पूज्या परमेष्ठिन पग ।
आराध्यताऽग्र्या नवपदानुश्रिता, जीवादितत्त्वानि नवैव चित्ते ॥१॥

सर्वेऽप्यास्तिकतां श्रिता मतधरा जीवं परं मन्वते,
षट्कायाश्रितमङ्गिनं यदि परं जैनाः सदा मन्वते ।
संसारं सरतां भिदा दशचतुःसङ्ख्या हृषीकादिना,
नैगोदान् भवधारिणो गतमितीन् जैनो भवेद् धारयन् ॥२॥

औदारिकादिपरिणामतया तनूनां,
भूम्यादिषु प्रकृतिभेदमपि प्रयाति ।
अन्नादितः प्रभव एव तनुस्तथापि,
नृणां समस्ति नहि चैकविधो गृहीता ॥३॥

क्षित्यम्बुवह्निमरुतो वनकाययुक्ताः.
पर्याप्तभावमयिताश्च परस्वरूपाः ।
एकेन्द्रियाः क्रमगतेः करणाधिकाः स्युः,
अन्त्ये मनोऽमन उदित्वरपञ्चवन्त ॥४॥

जीवाः समस्ता अविभिन्नरूपाः, सर्वज्ञताद्यैः सहिता गुणैश्च ।
कर्मावृताः संसृतिसारिणः स्यु–र्वैचित्र्यभोगास्तु विदक्षयोगैः ॥५॥

विशेषशक्त्यन्वितजीवघाते. पापस्य वाहुल्यमतो मनन्ति ।
ततस्त्रसानां वधतो विरामो–ऽनिवृत्तपृथ्व्यादिवधस्य योग्यः ॥६॥

नृपाः प्रजारक्षणतत्परा यद्, धनं च राष्ट्रं च तदुत्थमग्र्यम् ।
गवादिकं साधनमाग्यवन्ति, महाजनास्तद्वधकांस्त्यजन्ति ॥७॥

कुतीर्थ्यसम्भार इहारटेत्तु, त्रसं चलन्तं जीवरूपभाजम् ।
अनोभरैतद्वधपापमन्ता हहा ! परे स्वल्पमुशन्ति जीवम् ।
( बह्वपलापिनस्त्विमे ) ॥८॥

वधस्त्रियोगान्वितसत्क्रियाभि–स्तदुत्थमंहः शुचितामुपैति ।
त्रियोगजातात्तपसः प्रभावा–ल्लुब्धाः कुतीर्थ्या धनशोध्यमाहुः ॥९॥

सत्यधेभ्यो जीवजातघातान्, महत्तर पापमुशन्ति विज्ञा ।
आत्मोपमानेन सुखं समाचरेत, परेषु चेष्टा जिनमार्गमग्न ॥१०॥
म्यरीयपापेन भवन्ति दु खिता , ससारिणस्तत्र हृदुक्तिकायै ।
यस्यास्ति ग्रस्ति स न्धाति पाप, मत्वेति हिंसाविरतो हि जैन ॥११॥
मपोक्तिमुरयान्यपि जैनमार्गे, मतानि पापान्यघमोऽन्यानि ।
पर प्रतीकारनिवृत्तिहीन, हिंसोत्थमेनस्त्वतिदुस्तरान्तम् ॥१२॥
धर्माथिता निमलतेभिणो जना, न्यान् गुरून धमपन्नानि नित्यम ।
सेवन्त आन्दतया न्यथानि यथा प्रदीपातनदीपज्ज म ॥१३॥
न्यस्त्यानि भूत नहि जैनमार्ग, दयादितत्त्व स्वगुणार्पक न ।
निमित्तभावेन गुणान्वित नात फलति सेवाश्रयिणा नराणाम् ॥१४॥
लोकानुभावान्वितभ यताया, योगात परावस्तमुपेत्य चान्त्यम् ।
आलम्ब्य देवान् गुरुधमयुक्तान्, भ या लभन्तेऽव्ययधाम नयम् ॥१५॥
कालेन मो न गतवन्त इष्टं , सुसाधनैव ननु ते हान ता ।
भयो न तेषा गमितार एव, जीवाननन्तान् मनुतेऽत्र आप्त ॥१६॥
सुन्दप्रवाह प्रलयेन याध , स्वय प्रकल्पेन यथा न विद्र ।
नालन सर्वेण न मुन्दमाना, असङ्ख्यभागप्रमिता निगोदात ॥१७॥
उन्ना परे जीवविहिंसनादि-कार्य समुत्पत्तिमुशन्ति धर्म्याम् ।
यथापरा ज्ञानसुम्यचरित्रे जैनास्ततस्तेऽनघमोक्षगामिन ॥१८॥
भतो यो नव जीवो, न च मनुष्यजो, नैव भागोऽन्यसक्तो,
नास्तौ भोगहीनो न च, न च कलितोऽज्ञानमूर्त्या, न चान्य ।
भित्यादिभूतवृन्दान न न परभवगो नैव जातो न नारी,
स्त्यव चतन्यधर्तृन भिन्नपन्थमान जैन आख्याति जीवान ॥१९॥

इति न्यमोऽध्याय ।

## । एकादशोऽध्यायः । ( अजीवाधिकारः )

जैनः सदा मनुत आत्मविभिन्नरूपान्,
धर्मेतराभ्रसहितान् विविधाणुसङ्घान् ।
जीवाणुसङ्गम इहानुविशेत्तु युक्तिं,
मन्येत लोकमितरं क्रमतश्च चेद् ज्ञः ॥१॥

धर्मो गतौ भवति हेतुरिहाङ्गयणूनां,
तेषां स्थितौ प्रभववान् इतरो ह्यधर्मः ।
अभ्रं तृतीयमवकाशमथो ददाति,
वर्णादियुक्तमिह नास्त्यपपुद्गलं तु ॥२॥

भवेयुस्त्वणुभ्योऽङ्गवाङ्मानसादि-
सुसौक्ष्म्यादिबन्धान्तयुक्तास्त एव ।
द्विधा तेऽणवः स्कन्धरूपा ह्यनन्ता,
हि द्रव्यार्थताभेदयुक्ता अनाशाः ॥३॥

अभ्रे जीवे पुद्गले चास्तिकायेऽनन्ता अंशा एकजीवे त्वसङ्ख्याः ।
धर्मेऽधर्मे पुद्गलेऽसङ्ख्यकास्तु, कालो द्रव्यं मानुषे लोक एव ॥४॥

यच्चन्द्राद्या गगनगमनतश्चारिणोऽत्रास्ति भागे,
घस्राद्यास्तद्भुव इह मताः कालभागास्तथैव ।
वृत्तिर्नामः कृतिरधिकृता सर्वदा सर्वभागे,
कालस्यैषोपकृतिरपरा केन नैवाद्रियेत ? ॥५॥

प्रतिक्षणोत्पादविनाशनित्या—वस्थास्वरूपं सकलं हि वस्तु ।
किञ्चित् स्वरूपेण पराश्रयेण, किञ्चित्त्वजीवा अपि तत्स्वरूपाः ॥६॥

परे कुतीर्थ्यां प्रतिबोधशून्या, नश्वरजीर्णत्वमुखा क्रिया हि।
अर्थेषु साक्षात् सकलेषु दृश्य-न्त्यपि प्रमाणं न वदन्त्यनेकम् ॥७॥

सत्त्व सन् जगतीह वस्तु द्रव्यप्रमुखैर्निजपर्ययैः स्यात्।
पराश्रितस्तैरसत्त्व नात्र, विरोधभागोऽस्ति विचक्षणानाम् ॥८॥

नामाकृतिद्रव्यपदार्थरूपैः, समन्वितं सत्त्वमपीह सृष्ट्वा।
नोरीकरोत्येव कथं कुतीर्थ्यं, स्याद्वादमुद्रानतिपाति वस्तु ॥९॥

सत्त्व पदार्थे सहजं न चान्य-सम्बन्धभावि प्रसिते गुणश्रिये।
तुरङ्गशृङ्गेण समानमन्ये, सम्बध्य तद्वन्तमुदाहरथम् ॥१०॥

विचित्रभावा खलु पुद्गला समे, जीवग्रहे सन्ति त्रिधा प्रसिद्धा।
औदारिकाद्या अमिता परा हि, स्वयं क्रियावन्त उमापतेर्नहि ॥११॥

अणोः स्वरूपं न निरुद्धमन्ये-रनन्तभागात्मकमेव दृश्यात्।
तद्वत्प्रदेशस्य न चैभिरुद्ध, कालस्य सूक्ष्मः समयः कुतीर्थ्यैः ॥१२॥

जीवस्य यावं सकले ह्यनुग्रहं, क्षमं ह्यदृष्टं तदिदं तु पौद्गलम्।
आचार्यशुद्धेः श्रम आवृतीनां, क्षयक्रमे तच्छिवमात्मभावि ॥१३॥

अजीवशब्दः परिगृह्यमानो, नञ्शब्द आहाऽत्र निषिद्धदृशम्।
चैतन्यभावप्रतिषेधरूपं पदार्थरूपं न तु शून्यताङ्कम् ॥१४॥

नित्यान्यवस्थानयुतानि पञ्च, धर्मादिकानि प्रविभक्तिभाञ्जि।
रूपादियुक्तं परमाणुमुख्य-मेकं स्वयं पौद्गलिकस्वरूपम् ॥१५॥

यद्यपि चेतनविगुणा एते, ह्याप्तन्मेतद्विहास्ति विहाने।
मोक्षपथैकसहायकराणि, नूनमुदाराणि निचकभृता स्युः ॥१६॥

यावल्लोकं धर्माऽधर्मौ सिद्धिशिला यावत्तौ च,
परतोऽलोके नहि तद्भावाद् गमनं जीवाणूनां धावात्।

मृल्लेपादियुतं वरतुम्बं व्रजति तले धृतजलनिकुरम्ब,
अपगतलेपं तिष्ठेदुपरि तद्वन्मुक्तो भुवनतलोपरि ॥१७॥

तत्त्वे द्वे जगति स्तः तत्त्वात् जीवाजीवौ भिन्नाभावात्,
नह्येतावन्मात्रोक्तौ स्याद्धेयाऽऽदेयविवेकाभावात् ।
मोक्षपथप्रथन, तत उक्ता सप्त सुतत्त्वी तत्त्वार्थोक्ता ॥१८॥

अपेक्ष्यवादः सदसत्प्रवादो, विभज्यवादः परिवर्त्तवादः ।
वादा अनेके जगतीह मूर्ध्नि, स्याद्वाद आख्यद् द्रविणे त्रिकालम्॥१९॥

एवं जैनो जिनवरगदितेष्वागमेष्वेकचित्तो,
जीवाजीवौ मनुजमतिगतौ मन्यते शुद्धभावः ।
एवं साध्यं प्रवरमतिमान् रत्नत्रय्यात्मकं तु,
चित्ते धृत्वा नियतसुदयवान् जैनमायाति मार्गम् ॥२०॥

इति एकादशोऽध्यायः ।

---

## । द्वादशोऽध्यायः । ( पुण्याधिकारः )

पुण्ये भेदा भविसुखकृतये विंशती द्वे द्वियुक्ते,
वेद्याद्युत्था यदि च भविनो ह्यानुकूल्ये ह्यपेक्ष्यम् ।
सम्यक्त्वाद्याः प्रकृतय उदिताः सर्वमेतद्धि सत्यं,
जैनो जैनं प्रकृतिसुभगं त्वाश्रयेत् स्यात्पदाङ्कम् ॥१॥

अकामनिर्जराबलाच्च चिनोति पुण्यमुत्तम,
निगोदतः प्रयात्यसुस्ततो बहिर्निगोदताम् ।
ततस्ततोऽनुयात्यसौ दशां च व्यावहारिकी-
मुपैति सूक्ष्मबादरक्षितिप्रभृतिभावताम ॥२॥

अनन्तपुण्यलाभता ह्यकामनिर्जरावला-
दुपैति जन्तुरन्वगाः क्रमाक्षवृद्धिशालिनीम् ।
अनुक्रमेण पञ्चकं यदेन्द्रियाश्रितं भवेन,
पुण्यलाभसम्भवेऽधिकेऽत्र मञ्जितोद्भवो,
नरत्वमार्यदेशजातिगोत्रधर्मिसङ्गमं ॥३॥

य एव यात्यनावृते पदं समस्तकर्मणा,
क्षयात्तनावृतो भवी भवं विहाय चोपरि ।
प्रचण्डपुण्यलाभजं यदाद्यमश्नुते तनौ,
शुभं तु कीकसाश्रयं शिवेऽपि साधनं ह्यत ॥४॥

अभव्या अपि प्राणभाजो ह्यनन्ता, समुपेत्य मार्गं जिनेन्द्रोक्तिशुद्धम् ।
प्रकृष्टं समुद्धाय पुण्यं ह्यगुरुतरं, सुधामोपरिमं यन्निवर्त्तमानम् ॥५॥

अनुप्तं चेद् बीजं भवति जलगो नैव फलदं,
शुभेऽप्युर्वी यस्मिन् प्रबलतरयत्नः कृषिबले ।
तथैवैषा प्राप्य (तथा नैषा मोक्ष) प्रचुरतरपुण्यं च लभता,
सुसम्यक्त्वाभावाद्भवति शमिना तद्गुणभृताम् ॥६॥

यथा यानं ग्रामान्तरमुपगते नैव फलदं,
परं तद्धेतुत्वात्तत्र सुकृताना सतिरिह ।
न सा स्यान्मोक्षाप्तौ नियतमसका कर्मविलयात,
परं सौख्यं मुक्तौ भवति निभागोपगमितम् ॥७॥

तृष्याया नव वाञ्छा भवति कृषिकृते सोद्भवेनिश्चयेन
धान्याप्ते प्राग नगत्या निन्दितमनुपमं सद्दशा पुण्यमेवम् ।
मोक्षाय सच्चरित्रे प्रतिकलमुदिता सत्प्रवृत्तिर्मितानां,
मत्यैव मा च निर्द्धन्य सततममिरता पुण्यभागोऽप्ययन्यम् ॥८॥

आस्तिकवर्गः सर्वः पुण्यं मनुते काङ्क्षासिद्ध्यै चारु,
अष्टविधा न मता पुनरेषां कर्मण आवलिका ह्यनुमेया।
जैने धर्मे ज्ञानादीनामावृतिगमनान साऽष्टविधा वै,
पुण्यं तत्राघातिनिबद्धं पापमघातिनिबद्धं कर्म ॥९॥

वेद्ये नाम्न्यायुषि गोत्रे स्युः शुभसंयुक्ता अशुभास्तास्तु.
शुभ्रा नामाद्याः पुण्यात् स्युः पापात्त्वशुभा एताः सर्वाः।
योगात् कर्माश्रवति प्राणी पुण्यं तस्मात सुन्दररूपान्.
न विरुद्धं निर्जरया यस्माच्छ्रेणि त्यक्त्वाऽनुत्तरजन्मा ॥१०॥

मन्वानाः पुण्यतत्त्वं कतिचन विबुधा मन्वते पापतत्त्वे,
हान्याः पुण्यं प्रकृष्टं परिगतमुदयेऽस्मिँस्तथाऽल्पं तकत्तु।
नैतद्युक्तं यतो वै परिजनविभवाद्य सुखस्यैक हेतु–
र्नैतच्चाभावजन्यं न च दुरितहृतेः पुण्यमेतद्धि कुर्यात ॥११॥

पुण्यं त्रिधा मतिमता गदितं त्रिधा तु,
पुण्यानुबन्धजनकं निरवद्यवृत्तेः।
पापानुबन्धमपरं जनयत्कुदृष्टेः,
श्रीवीतरागपदगादनुबन्धशून्यम् ॥१२॥

अज्ञो नरः फलमुपेत्य भवेत् प्रसन्नः,
पुण्यस्य, वेत्ति न तु पुण्यविकाशहानिम्।
भुक्त्वा फलं दुरितसन्ततिजातमज्ञ,
उद्विग्नतामुपनयत्यघहान्युपेक्षः ॥१३॥

शिशोर्न जातिर्जनकाद्यभीष्ट्या,
शिशोरभीप्साऽपि न तत्र हेतुः।

तन्वान्हिीनस्य न चेश्वरस्य,
किन्त्वेकमेवाऽत्र सह हि कर्म ॥१४॥

आढ्यस्य रोगैं रहितस्य कश्चित, कुले जनिं प्राप्नुत इष्टदात्रीम् ।
परोऽपरस्मिन्नहि तत्र मुक्त्वा, कर्मैव, हेतु प्रवरोऽस्ति कश्चित ॥१५॥

अक्षाणा पटुताऽऽयुष सतलता शत्रौ जले जङ्गले,
रक्षा सङ्गरसार्थजातविपत्ति चौराग्निपाते भये ।
दुष्टेभ्यो नृपतिभ्य इतिसमितौ व्यालाहिनागोद्भवे-
ऽप्रेमेऽनाथत इष्टितो नरभवे तत्पुण्यनिष्क्रजितम् ॥१६॥

तनोति भक्तिं जनता गुणाढ्या, शृणन्ति विद्यानिपुण हि पाठका ।
लभन्त आत्मयमुत्तमनतु, सुराकार सत्कुलमेव पुण्यात ॥१७॥

अशुभबन्धानि समस्तपुण्या-न्याहारयुग्म जिनता विहाय ।
आपि निदान शुचिमयमो यत, सम्यक्त्वहेतु जिनतार्जने हि ॥१८॥

पुण्य प्रधान भरतानुजे च-क्रल नृपेन्द्रान्धिक द्वयाऽऽह्वये ।
रूप हि नाकोकम ईहनाह, सनत्कुमार न ऋतेऽतिपुण्यात ॥१९॥

पुण्यात प्रथिव्यान्य आनुकूल्य, नैयत्यमिष्टऽतुलहेतुता मधु ।
यस्मान्यो न प्रभवन्ति तस्मिन्, मोक्षस्य मार्ग च सहायिताऽस्य ॥२०॥

सर्वार्थवेत्तार न्गारमाया, सर्व समाना परमस्त्यपुण्यम् ।
निनेश्वराणा निरियलोत्तिमाग, वाणी जने सशयभेत्त्रक्षा ॥२१॥

अतीर्थपा यद्यपि साधुवृन्द, प्रज्ञानयत्येव पर प्रवाह ।
न्याप्येह तीर्थं जिनराजभूता, प्रभाव ण्योऽस्मत्पुण्यमहते ॥२२॥

मैत्रीमुदिताकरुणोपेक्षा , सत्त्वाऽधिक-दु खि-कुपात्रे
धर्म्यं गुरूर जिनगुरुसेवा, पुण्याद्यान्युपकृतियुग रक्षा ॥२३॥

सम्यक्त्वं चरणं विनयाद्यं वैयावृत्त्यं सह पाठाद्यैः ।
यान्यर्हत्पदकारणभूता—न्यर्हत्पूजादीन्यमितानि ॥२४॥

यद्यपि पुण्यापुण्यक्षयतः, साध्या मुक्तिः शासनशस्ता ।
तदपि च जिनपाऽऽदेशाः पुण्ये कारणभूता न पुनर्दुरिते ॥२५॥

श्रेणिक्षय्याः प्रकृतयः पापाः, सर्वत्रास्ति क्षय आप्तोक्तौ ।
... ..... .... ........ ... . ..प्रतिपदमेनोवृन्दस्यार्थः ॥२६॥

कषायतो भवति कर्मणां रसे, बन्धने विमात्रया सदाङ्गिनाम् ।
तदुक्तिरेनसो रसेन पुण्यगे मन्दताऽनुगो रसोऽत्र गीयते ॥२७॥

निर्जराकृते कृतान्यशेषधर्मसाधना—
न्यबन्धकानि सन्ति नो परं तदर्थिताऽत्र न
शुभोऽपि पुद्गलाश्रयो निमित्त्यपीष्यते नहि ॥२८॥

जिनेन्द्रवाङ्मयेष्वघानि निन्दितानि विस्तरात्,
कृपापि पापमाश्रितेषु दुःखितेषु सम्मता ।
पुद्गलैः सुखं भवत् प्रशस्यते क्रियादरे,
फलं वृषस्य मुक्तिवत्त सुरालयोऽपि शस्यते ॥२९॥

मुक्त्यर्थमुद्यतमतिर्यदि सावशेषाऽ—
दृष्टो भवेत् सुरनराधिपऋद्धिपात्रम् ।
अत्रैत्य मुक्तिमपि साधयति प्रधानां,
मत्वेति पुण्यपथभृत्तु भवेत् स जैनः ॥३०॥

इति द्वादशोऽध्यायः ।

। त्रयोदशोऽध्याय । ( पापाधिकार )

जैनो भवेत् सकलसाल्मपापभीर-
र्नैनापयान्ति भयतोऽनुगता अपाया ।
नैमित्तिना न भवति प्रलयो निमित्त-
नाश विना भवति सोऽपि च पापभीर ॥१॥

यद्यप्यनिष्टफलं सकल हि पाप,
तस्य तथापि यदिद प्रचुराङ्गिसत्स्थम् ।
बाधाकरं जगति मोक्षविधौ च नित्य,
नाज्ञातमुज्झति न च प्रयतेऽत्र लाभ ॥२॥

पापोपभोगमखिलेऽव्यवहारराशौ,
पर्याप्तिहीन उदितेऽपफले भवेद्धि ।
गय परापरदशासु सदोपभुक्ते,
पापानि तत्फलयुतानि भवेऽखिलेऽत्र ॥३॥

भवदकामनिर्जरानलात्रयस्य सञ्चयो,
भवेत नैव पुण्यगत पाप्मना विरोधिताम् ।
विशुद्धसाधना नरा न सनशुद्धसाधना,
यन्यनेऽपि नानयोर्निरोध इष्यते बुधै ॥४॥

यतोऽनुसार्य पुरातनाह्मा सन्देय,
सम तु पुण्यपापयो न केवलस्तु कस्यचित् ।
तन्यके कषायितेऽयमिष्यते सपापक,
चरमयोगिन समेत्युन्य एनसा पुन ॥५॥

पापं स्वतन्त्रमणतीह च वावदूकः,
कश्चिद्वदत्यपि च पुण्यपदार्थसंस्थे ।
अल्पेतरत्व उदितेऽघचयः क्रमोत्थ-
श्चिन्त्या तु तत्र विपरीतपदार्थभूतिः ॥६॥

पुण्यस्यास्ति निबन्धनं शुभतरा योगाः शरीरादयो,
मन्दत्वं च कषायसन्ततिगतं पापे परे हेतवः ।
बन्धोऽस्याशुभपुद्गलाऽन्दनभवो योगादनिष्टात् पुन-
र्मिथ्यात्वाऽव्रतकोपनादिसहिताद्यावत्कषायोदयः ॥७॥

स्थानानि पापस्य मतानि विज्ञै-रष्टादश प्राणवधादिकानि ।
आद्यानि पञ्चाऽत्र तु हेतुकार्य-स्वरूपभाञ्जीति पुरा त्यजन्तु ॥८॥

स्वाभाविका नहि मताः सुगुणाः कुतीर्थ्यै-
र्ज्ञानं दृशिश्च चरणं भवभृत्सु मोहात् ।
तन्नावृतीरनुसृता गुणसङ्घहन्त्र्ये(त्र्यो)-
स्तत्तत्त्वभूतविभूतिर्न मताऽऽत्मनोऽन्यैः ॥९॥

विचित्रतैषां परमेश्वरे चित्, स्वभावभूता करणाद्यभावात् ।
सैवाऽऽत्मनीष्टेन्द्रियसार्थसिद्धा, न तत्त्वतश्चेतन इष्ट आत्मा ॥१०॥

नातीन्द्रियार्थमतिभिर्विततानि तेषां,
यद्दर्शनानि, तदिमेऽपलपन्ति वस्तु ।
घातीनि किं निजमतो दधते ह्यघाति ॥११॥

सप्तभिराढ्या चत्वारिंशन्, न मताऽघांशानां तैस्तीर्थ्यैः ।
न च तन्नाशपरोद्यमकथनं, ज्ञमन्यानां नहि तच्चित्रम् ॥१२॥

तद्देवन हि विदित नैतत्, यत्रातीन्द्रियवेद्यात्मा म ।
जिनपा सकलज्ञास्तद्विदु-र्निर्युमोग तद्घातोत्कम् । ॥२३॥
पापापहर्तौ शक्त मार्गं, विदित्व-जगतीजनहितकारम् ।
सम्यग्दर्शनबोधचरित्रै-र्युक्त स्वात्महितैषी श्रयते ॥२४॥

पापाना यत्निदान बधनिरतियुत म्यर्थवागादिहान,
निज्ञायाचार्यपार्श्वे तत्करणनिधौ मन्त्यजेत् सर्वथा तत् ।
हत्वा सर्वथा यत परिहतिरमला शङ्कनादौ गताना,
त्यक्त्वा पापौघमेव म्वगतमुदयते रूपमात्मा स्वभावात् ॥२५॥

पुण्य च पाप च न तत्त्वशास्त्रे, तत्त्वे पदे नैव विचारिते यत् ।
यद्ध परावर्तयतेऽपि पुण्य, क्षमादियुक्त सुकृते च तद्वत ॥२६॥

तथा स्वरूपेण विपर्ययेणा-नुभूयते कर्म सम द्विधाऽपि ।
प्रवेद्य पाप तपसा विनाश्य, द्विधा भवेन्निर्मल एव आत्मा ॥२७॥

परस्पर मद्भ्रमभावभाजो, मूलान्मिन्ना खलु कर्मभेदा ।
अन्यच्च जीवान्य आप्तभेदा, परस्पर युग्ममिद न चेत्थम् ॥२८॥

भिदा या मता आस्रव बन्धने च, ता एव भक्ता द्वयेऽस्मिँस्ततो न ।
प्रतीत्य भोग प्रतिघातशून्य, सम्यक्त्वमुख्या सुकृतेऽपि गम्या ॥२९॥

आत्मस्वरूपे प्रतिबन्धकत्व-मपेक्ष्य पापेऽधिकृता मुनीशैः ।
सापेक्षभावे हि विरुद्धता-न, विरोधलेपप्रतिपादिनी स्यात् ॥३०॥

शुभा पुद्गला पुण्यरूपेण जीवै-र्य आत्तास्तरे पुण्यमन्यत्तु पापम् ।
चयो योगत कर्मणा च स्वभावो, यथा काययोगात् ग्रहि पुद्गलानाम् ।
मत नो घृत नो न चोक्त तथापि, पुराणस्य पाकेऽस्तिनोऽयमन्देन ॥३१॥

बन्धोऽघानां विरमति यदा रुध्यते तद् गुरुभ्यो-
ज्ञात्वा रूपं विरतिनियमं धारयित्वा त्यजेज्ज्ञः।
नामाक्षिप्तं भवति जनता गोचियानेषु तेन,
सत्यङ्कारैर्विहितशपथैस्तोत्रमानेय आप्तः ॥२२॥

सूक्ष्मत्वं स्थावरत्वं विकलितकरणं कायपार्थक्यहानि-
दौर्भाग्यं दुःस्वरत्वं स्थितिरहिततनुर्वाक्यमादेयशून्यम्।
अङ्गोपाङ्गादिघातं गतयश उदिति सर्वमित्यादि पापान्,
मत्वा सुज्ञो विरज्याज् जिनमतनिपुणो जैन एनःप्रयोगात् ॥२३॥

यथाऽऽकरोद्भूतगुणप्रशस्यान्, महार्घता मौक्तिकमालिकायाः।
तथैव पूज्यो नर उच्चगोत्रा-द्विश्वेऽनुपूर्व्योऽस्ति परप्रभावः ॥२४॥

दृश्यन्ते जगतीह सौख्यधनिकाः शून्या वरैः साधनै-
स्तद्युक्ता अपि दुःखभारकलितास्तत्स्फूर्जितं वेद्ययोः।
सद्द्रव्ये वरयाचके न वितरेत् प्रेस्यं लभेतापि नो,
वीर्ये भोगयुते भवेद्विमथनं तद् दुष्कृताज्जन्मिनाम् ॥२५॥

लोके लोकोत्तरे चाध्वनि परिहरणस्यार्हमेतन्न शङ्का,
लोकास्तत्त्वार्थमुक्ताः परिभवपदवीं पापिनः प्रापणीयाः।
आत्थेति क्रोडयेदं प्रभुरभिनयते पुण्यपापक्रियासु,
विश्वं तल्लोकसङ्घः कपिवदभिधरत्येष चेष्टाऽसमर्थः ॥२६॥

चिन्तयन्ति नैव ते दयोक्तयोऽतथाभवा,
व्यथोद्धुरे भवेत्पदं कृपालवस्य सा परम्।
पुराणपापपाकजाऽपरं च निर्दयः प्रभुः,
करोति जातमङ्गिनं महाव्यथाऽर्भकादिषु ॥२७॥

पुरातनस्य कर्मण फल भवदयज्जनो,
नवीनमन्दतीह पापमेव दीर्घकालिकम् ।
ततो विधातृतेशितुर्न शोभते मता रणे,
न चेश्वरे पद मनेद्भवस्थनालकोन्वित,
तदेतदुक्तमर्हता विमुच्य फन्गुवादिमि ॥२८॥

जैना ब्रुवन्ति जगतीसकलासुमत्सु,
मैत्र्या यत्र भुवने दुरित न कोऽपि ।
भो ! सन्दधातु, यदि चाऽद्दत पाक् तथापि,
धर्मात् प्रणाश्य फलवेन्नमाक तु माऽस्तु ॥२९॥

भावानुकम्पनयुता मनसा स्पृहन्ते,
यन्मुच्यता जगदिद सकलाघभारात ।
नास्तीह यद्यपि समस्तजनस्य मुक्ति ,
सम्बन्धिजीवनपरोक्तिरिवेह योग्यम् ॥३०॥

यन्मुच्यते मनुजभावगतो हि जीव-
स्तस्मिन् सतीह जगतीतरसत्त्वसत्त्वम् ।
आवश्यक, न च भवन्ति समे मनुष्या-
स्तन्नास्ति सम्भवि पर करुणोक्तिरेषा ॥३१॥

जन स्यात् सो विविधविधितोऽपापमीत पुरापि,
लब्धे धर्मे प्रचुरकरुणासङ्गतेल धर्ममैत्री ।
मान्योऽस्य स्याद्विविधविधिना हिंसनाद्यादिवर्जी,
देय साधु प्रवचनरतो धर्मधुर्योऽन्ययार्थी ॥३२॥

इति त्रयोदशोऽध्याय ।

## । चतुर्दशोऽध्यायः । (आश्रवाधिकारः)

वेद्यते सकलजन्तुभिर्भवे, कलां कलां प्रति सुखं व्यथान्वितम् ।
कर्मणामुदयतो. न चाप्यसौ, बन्धमन्तराऽऽश्रवानृतं न सः ॥१॥

जैनो मनुते तत्त्वावल्यां, तद्योगानाश्रवहेतूनग्र्यान् ।
आश्रवभेदौ द्वौ शुभमङ्ग कायोक्तिहृद्योगद्वैध्यात ॥२॥

दुःखे च सौख्येऽसुमतां समस्ति, यथानुभावः सततं निजऽङ्गे ।
तथैव बोधावरणादिजाते, स्वभावरोधाद्विदुपाऽमिमान्यः ॥३॥

सुखद्वन्द्वमाविश्वकास्त्यात्मनोऽन्त–स्तथैवात्मबोधादिनाशात् पराणि
विपाकप्रविष्टानि विज्ञस्ततोऽष्ट–कर्माणि मन्वान उदारदर्शी ॥४॥

एको वधो हेतुफलानुयोगी, चेत् त्यज्यते, त्यक्तमघं हि सर्वम् ।
स्वरूपहिसा प्रथमं हि पापं, भिन्नानि मिथ्योक्तिमुखानि तस्मात् ॥५॥

मुनिर्भवेत्सर्वत एनसो घृजौ, क्षमो, ह्यशेषा न पुनस्तथा क्षमाः ।
अभ्यासधामान्य आप्तवर्यो, अणुव्रतानीह परेपु रान्ति ॥६॥

तथाऽत्र शेषाधविलोडनाय, मतानि पञ्चाश्रवद्वारि विज्ञैः ।
योगाः कपायाः करणाव्रतानि, तथैव शास्त्रेण प्रणोदितानि ॥७॥

जीवा बध्नन्ति कर्मोदयमनु सदृशं तद्भवेदाश्रवेपु,
भागोऽपीष्टोऽत्र कर्मस्थितिमितिसदृशो योगमानाः प्रदेशाः ।
प्राच्यैः क्रोधादिभिस्तु भवति रसचयस्तन्न भेदोऽस्य बन्धात्,
बद्धं कर्मानुभाव्यं न च परजनितं ह्याश्रवास्तन्न योग्याः ॥८॥

कर्मवेदनं भवेद्यथाकृतं पुराङ्गिभि–
स्तदाश्रवा न तत्त्वगा भवेयुराप्तसङ्गिनाम् ।

हेतुरायभेद एव चेत्तदा न संशयो,
न जैनमार्गगा नरा श्रयन्ति जातुचिद् बुधा ॥९॥

न चास्ति जन्तुजात एष एक एव सम्भवो,
यतोऽङ्गिना क्षणे क्षणे नवा नवाऽस्ति भावना ।
भवन्ति वीर्यशालिनोऽङ्गिनोऽर्हमार्गगा पर,
पुरातन घन विनाश्य कुर्वतेऽल्पमेव तत् ॥१०॥

प्रकृष्यतेऽबुधोऽपि विघ्नसङ्गतो बुधीभवन,
प्रजायते जडोऽपि बुद्धिमाननिष्टसङ्गमात् ।
यत्र तु पथमन्थनानुसारि कर्म नूतन,
नराऽखिलोऽपि धर्मराट् ईप्सणीयो बुधोदित ॥११॥

निशि नराऽन्तरगुणैस्त्वयागताना,
प्रापमणा प्रतिपक्ष क्रियते निरोध ।
आपद्यतेऽपायविधिर्विविधो हि धर्म,
मर्त्य तदेव प्रथमात्मकता द्वयोर्हि ॥१२॥

ज्ञानाग्निपातकरणप्रवणा हि योगा,
ज्ञानादिपातपरसप्रभृतीर् दधाना
पूर्व कृत दुरितमाप्नवय दुरन्त,
कुर्वन्ति ते प्रथमिद मतमाश्रवाप्यम
[ हेतुमनुमाश्रयते प्रथमस्त्यम् ] ॥१३॥

कुरुतय जिनोपगम आश्रवेभ्य उग्रो,
मयगोऽथ तद्वय क्षयोऽथ कर्मणा तत ।
मद्यमाप्यते यदा तु पञ्चशून्यताऽखिला,
पुराणकर्मनिर्जरा नराऽपर पर भवे ॥१४॥

ततोऽवधानमाप्यतां सदाऽऽश्रवावरोधने,
न तद्भवेद्विनाऽऽश्रवावधानमन्तरा पुन-
र्भवेत्तु तच्च शास्त्रकृद्यदाऽऽश्रवान् विबोधयेन ॥१५॥

अकामनिर्जरागुणाल्लभन्त आर्यमार्गगा,
उदित्वरां दशां न सोऽन्तराश्रवप्ररोधिताम् ।
क्रमाच्छमित्वमाप्यते ततः परम्परा शुभा,
ततोऽवमान्यते बुधैर्न भिन्नताऽऽश्रवाश्रिता ॥१६॥

भवेन्नरोऽत्र धर्मभाग् यदीष्टमार्गमागतो,
निरोधने सदोद्यतो वधादिसङ्गताश्रवात् ।
जिनोऽप्यशेषबोधवान् सुदीर्घकालरोगयुग्,
न चान्ध आत्तवान् विकर्मिकं दयोद्यतः खलु ॥१७॥

आश्रवे पुराणकर्म जन्तुना निकाच्यते,
ह्रस्वकालमियर्यते प्रदीर्घकालभाविताम् ।
महारसं नयेत्परं बहुप्रदेशमल्पकं,
यतो निरोधनेऽस्य तु प्रधारयेद्विपर्ययम् ॥१८॥

जीवोऽनीशोऽयमात्मप्रतिनियतविधौ सौख्यदुःखैकहेतौ,
प्रेर्योऽसावीश्वरेणाशुभशुभकृतये हीत्थमाहुः कुतीर्थ्याः ।
तेषां वार्त्ताऽऽश्रवाणां न भवति सुखदा कर्णयोः श्राव्यमाणा,
स्यादेषा कर्णरन्ध्रेऽमृतरसतुलिता येन दासत्वलीनाः ॥१९॥

यथाऽऽतुरो वैद्यनिवारितोऽपि, जानन्नपथ्यं परिहर्तुमिच्छुः ।
रसेप्सुरत्त्यन्ध उदस्तवीर्य-स्तथैव जीवः सुखकाम्यघेषु ॥२०॥

श्रुत्वा कर्णरसायनं वच इदं य श्रद्दधीताश्रवान्,
रुन्ध्याद् दुष्कृतवारिवे समगुणान् मत्वा जिनेन्द्र वच ।
स स्यादात्मनि गुप्त उत्तमतिको धर्मान्तोऽनेकश,
स्याच्चासौ वर जैन एव नितरां गन्ताऽत्मनाराधताम् ॥२१॥

एतज्जैनस्य शुद्ध जिनपतिगदित सर्वशास्त्रैस्सार,
ज्ञेया सस्रवासे प्रतिपन्मरनादिष्ववस्थास्वपीह ।
पापानामास्रवा ये हृन्मततनुवचोभिर्विधानेषु ये स्यु,
स्रोधानेषु प्रयुक्तैन भवति परथा मार्गजैनत्वमुच्चै ॥२२॥

इति चतुर्थोऽध्याय ।

---

। पञ्चमोऽध्याय । ( सवराधिकार )

मत्वाज्जैन शुचितरमुदित सवर तत्त्वमूर्त,
पाप यस्माद्विरतिकरणात् तरेणेति नित्यम् ।
मिथ्यात्वाद्वा भननविषय नैष ता सद्धीरन्,
यस्मात्तेषा न भवति दुरित पापकार्ये प्रवृत्ता ॥१॥

जगति जैनकृपापरे कृपा, करणमात्रजमार्हरिघ परम् ।
अविरता यदि पापमवाप्यते, कथमनादिभवे विकलेन्द्रिया ? ॥२॥

सुप्तो यथाऽभिमरको विगतक्रियोऽपि,
छिद्र प्रतीक्ष्य वितनोति परस्य घातम् ।
जीवास्तथैव रहिता क्रियाविरत्या,
पापप्रचारमुदितेऽसवरेऽपशङ्का ॥३॥

निरोधः सर्वेषां मुनिभिरुदितः शास्त्रविधिना,
परित्राणायाऽघान् सततमुदितादाश्रवकृताम् ।
परं योगाः पापा वधमुखगता रोध्यपदवीं,
गता रोध्या विज्ञैर्निखिलदुरिताव्वरुधिकृतं ॥४॥

स्यगाढ्यव्रता[न्यव्रता]न्युग्रपापानि साधु-
रशुद्धा निरुद्धा भवेयुस्तु योगाः ।
कषाया हृषीकाणि रोध्यानि पङ्क्तौ,
भवेत् सा तु मध्ये मुहूर्त्तस्य साधोः ( जन्तोः ) ॥५॥

विवेको हि तेषां यतो यत्न एपु-
विपक्वेषु कार्यो कृतेर्निष्फलत्वम् ।
प्रवृत्तिश्च तेषां यथा नोदयः स्या-
दिति प्राप्तधर्मो निरुन्ध्याद् वधादीन् ॥६॥

ईर्याभाषैषणाऽऽत्तिक्षिपति-परिहरेपूद्यतो योगकार्ये-
र्गुप्तो वाक्कायचित्तैः क्षमणप्रभृतिभिर्धर्मभेदैर्धृतात्मा ।
क्षुत्तृड्मुख्या विबाधाः सहत उदयगा भावयन् भावनौघं,
चारित्रे चारुरूपे चरति दुरितह्रासं वृतोऽवद्यमेषः ॥७॥

एवं योगेषु शुद्धेष्वनुमतसुविधिः साधनं चारु वर्त्ते,
श्रेण्याः कर्मक्षपण्या यदि परमनणुः कर्मभारश्चिरत्नः ।
सर्वार्थान्तेषु देवो भवति स सुयतिर्भाविभद्रो विशेषात्,
सर्वाङ्गापूर्णवंशे जनिमुपसरिता सिद्धिमेता ध्रुवं सः ॥८॥

यद्येषोऽनल्पकर्मा परिपतति वृषात् संवराद् दर्शनाच्च,
नैवासौ संसृतौ स्याद् भ्रमणमनुगतोऽपार्धवर्त्ताधिकं तु ।

उत्पन्नताऽयमेनोनिचयमनुगतो ज्ञातु साधारणत्व,
निर्गत्याऽस्मात्त प्रयात्यखिलगुणगुचितामेति नीत्र शिव स ॥५॥

नाल्पभूष्णु सकलनिरतये भोगसक्तिप्रसङ्गाद्,
रक्तस्तस्था निरमति स पर दूशलो हिंसनाद ।
शुद्धये तस्या गुणञ्रणुदमी दिग्रतान्निर्दी स,
प्राप्ये सम्यग मुनिगुणनिचिते साम्यमुख्य चतुष्कम् ॥१०॥

यथायेन द्विकन्दर्शनियमा श्राद्धधुर्येषु योग्या,
तथैव स्यात्णुतमवरणामीप्सितोऽणुव्रतिने ।
तेनान्यथा सुखरक्षतये पौषधे नेष्यते तद्,
मिथ्यादृष्टो धरति सुनिरिति साधुता नैव यद्वत ॥११॥

य स्यात सम्यक्त्वमात्रो निगममनुसृत शुद्धचर्यान्रक्त,
सम्यक्त्वे मोहनाशात्र च धरति यम शक्तितो द्वादशानाम् ।
दह गेह पल्त्र द्रविणमसुल्य प्रेक्षते त्मारहीत,
प्राणान्तेऽसौ न जह्यात सुरततिनिहितेपूपसर्गेषु साम्यम् ॥१२॥

अणुव्रतानि धारयन् सदैव सुव्रते रतो,
यत्र यत्र क्षणो भवेत तदा तत्र स नित्यश ।
चतुर्विधऽपि पौषध च निश्चयात्तु पर्वसु,
नितान्तमाश्रितो भवेच्छ्रुतादिकार्यसिद्धये ॥१३॥

स इत्वराणि धारयेत्णुव्रतानि य पुन,
परम्परा समाश्रयेन श्रुत तु यावदन्तिताम् ।
गुणेषु शिक्षया युतेषु काल इष्यते ल्घु-
र्यीरण समाश्रये तु यावज्जीवता भवे ॥१४॥

दुःखित्वान्नरकाश्रिताः परकृतं तन्त्रं वहन्तः पुन-
स्तिर्यञ्चोऽमरतां गता अपि पुनः सामर्थ्ययुक्ताः समे ।
स्वीकुर्वन्ति न सर्वसंवरविधिं वाचः क्षणे साधनान्,
तन्नैकां नरतां विना क्वचिदपि स्यात् संवरः सत्तमः ॥१५॥

धर्माचारधरः सदाऽनुमनुते पाथेयमामुष्मिकं,
देवाचार्यसुकृत्यपूजनविधौ शुद्धा भवेद् या कृतिः ।
तीर्थानां परिषेवणा, वृषवतां भक्त्या समाराधना
याऽन्ते स्याच्च समाधिना मृतिरिति प्रध्वंसि शेषं पुनः ॥१६॥

जीवेषु क्लेशवत्सु व्रजति करुणया रक्षणे सत्प्रयत्नं,
यस्माद् दुःखान्वितेषु प्रयतत उदिते ह्यार्द्रभावोऽवनाय ।
यत् तच्चिह्नं प्रसक्तेरधिकृतसुविवेर्भावसम्यक्त्वजाते-
रर्ह्यं तल्लक्षणं चेतरमिपचयतो जैन वंशे विशेषान् ॥१७॥

सुसंवरास्ते यदि भावनाभि-र्यदात्मना स्वाभिरनुश्रिताः स्युः ।
महाव्रतेषूद्यतधारणायां, यथा तथाऽणुव्रतधारणायाम् ॥१८॥

सदा प्रतिज्ञा सुकरा सतां स्या-न्न पालना सद्वृषमाश्रितेष्वपि ।
योगास्ततो धर्मपरैरमूभिः, सद्भावनाभिः सततं प्रवर्त्याः ॥१९॥

योऽणुव्रतानां यमिनां समक्ष-मागूं विधत्ते भयतोऽघसन्ततेः ।
दिने दिनेऽसौ मुनिताधिगत्यै, प्रतिव्रतं संस्कुरुते ह्यमूभिः ॥२०॥

महाव्रते स्युः सततं समुद्यता, ये तेऽप्यमूभिर्न निजं वसीरन् ।
आसूर्यकाद्याभिरुपासयेयु-र्द्विधा विहारार्हसुभावनाभिः ॥२१॥

सुसंवृता विस्मयति नैव मृत्यो-र्यतो यतानां सुगतिः पदाम्बुजे ।
विमोहतः शोकमुपैति सक्तः, क्षणः परः सोऽनघजीवितानाम् ॥२२॥

न जीवन स्यु प्रतिबद्धभावा, यथायुरेवाणनमङ्गिना यत ।
क्षणो हि धमस्य पर दुरापो, मत्वेति रत्नत्रितयाप्रधाना ॥२३॥

भाव्य समं मङ्गल्ये रिपौ च, स्त्रैणे तृणे चाऽऽमसुवर्णयो पुन ।
भवे च मोक्षे च विभाव्य मार्गं, भवगवैराग्यपर निजेप्सितम् ॥२४॥

परे समस्ता प्रसृता हि धर्मा, वदन्ति दौर्गत्यगमोऽन्तितानि ।
दु खानि वैराग्यकराणि जैन–श्वतुर्गतीना तु भयानि वेत्ति ॥२५॥

निर्भेति सर्वोऽपि भवाश्रितोऽङ्गी, मृतेन सोऽप्यैति भयाद् निमीत ।
सम्यक्त्ववारत्नजननाद् यतस्त–न्निवायमेतच्च विना न मृत्यु ॥२६॥

ध्येय सन्ततपरिसधृताना, कम्र ह्यसङ्गो बुध (नस) ल्पवास ।
मलात्तस्नेहो भ्रमरोपमाना, यथा कम्र सद्गुरसश्रित श्रये ॥२७॥

सदा त्रियें गुणे कुले निवास आर्हते मते,
गणाधिपास्तथाविधा अपि श्रुत पद जगु ।
अभिन्न एव तद्बहिर्गतैस्तु मोहतस्कर–
स्तदाश्रयाश्च तद्विधास्ततो गुरो कुल श्रयेत् ॥२८॥

यद्यपि दहो गुणकुलयुक्तो, मोक्षपदावह उक्तमुनीनाम् ।
तदपि निराबाध पदमेनु, त्युत्सृजतीह सम मुनिरन्ते ॥२९॥

आजीवितार्द्धर्मपरो हि जैनो, रत्नत्रयाराधनया कृतार्थ ।
तत्त्वत्रयी मानसकोशन्दो, सदा दधत् प्राप्स्यति शाश्वत पदम् ।
(भग्न सदानन्दपरे समन्ते) ॥३०॥

इति पञ्चदशोऽध्याय ।

कल्पातीत फल यत् भवति नरगणे तन्निदान जिनार्चा,
ध्यावेति शास्त्रवाचाऽनुगतमतिकृति साधयेच्छ्रीजिनार्चाम् ॥५०॥

इति चतुर्विंशोऽध्याय ।

---

। पञ्चविंशोऽध्याय । ( चैत्याधिकार )

स स्याज्जैनत्वधारी जिनपतिचरणप्लावित चैत्यमाढ्य,
ग्रामे वा पत्तने वा यदि भवति तदा वासमादातुमिच्छेत् ।
निष्काणा चेच्छत सद्धरति निजवश कारयेद्वासधाम्नि,
चैत्य नूत्न यत स्यादविरलगुणभृत्पुत्रपौत्रान्वित्श ॥१॥

जिनेश्वराणा महनेन भावो, यथा विना श्राद्धवृषोद्वहानाम् ।
तथादिधर्मश्रयणान्विताना, भावाय चैत्य सुकृतोद्वहाय ॥२॥

वशानुवशागतसज्जनाना, गृहस्थिताहन्निलयेक्षणेन ।
दिने दिने स्याज्जिनधर्मवृद्धे-दूर्वव शुद्धक्षितिरोपिता या ॥३॥

निजात्मजाना परिमाननीय, सार्थश्च जाप्यश्च निषेवणीय ।
को मङ्गलार्थं परिपूजनीयो, देवोऽभवत्तत्सरमिद्धचैत्याम् ॥४॥

जिनोपदश विनिशम्य दधा, येनाऽऽगमात्तीर्थविनोधनाय ।
गणेशिता सोऽर्हदुदारचैत्य-तर्ति पुरस्था परिकीर्त्तयेद्धि ॥५॥

जगत्यस्मिन् सत्र नगरवरनिगमग्रामसदश,
जनाना भूपाना निवसनजनितगौण्यमहिम ।

क्षणाद् दृष्टं नष्टं जनपदजननाशेन नियतं,
तथापीक्षन्ते ज्ञाः पुरवरपरिगतैश्चैत्यकृतिभिः ॥६॥

पुराणामुद्वसानां प्रकीर्णैर्युतानां, मतानां नृपाणां विनाशं गतानाम्।
विबोधो बुधानां तदारम्भणैः स्यात् सुचैत्यानि दृष्ट्वा तथैवाप्तराजेः ॥७॥

दृष्ट्वा मूर्ति वीतरागप्रभूणां, स्याद्वै बोधो दृग्दुरापतस्य शुद्धः।
दृष्टे चैत्ये चित्रकीर्णे तदीया, बोध्याऽवस्था प्राक्तनी चित्तचोक्षा ॥८॥

यथा साध्यसिद्धिर्विना साधनं नो, तथा साधुतां शुद्धधर्मौघमाङ्काम्।
विना वीतरागस्तदेतद्विधानं, सुचित्राङ्किते चारुचैत्ये समानम् ॥९॥

भाषा या लिपिसंश्रिता न नियता कालेन देशेन च,
प्राप्ताऽनेकश उच्छिदं बुधमता चित्रं तु पाषाणवत्।
प्रेक्षन्ते समकालगा बुधजडा गच्छन्ति सत्यं पथं,
तस्मादाचरितव्यमेतदमलैश्चित्रैर्युते चैत्यके (मन्दिरे) ॥१०॥

घनरिक्थयुतैर्वरबुद्धिधनै–र्जिनवाङ्मयविद्धशुचिश्रवणै–
र्घननित्यसदागममानधरैः, श्रमणादिसुसङ्घघनिष्ठमतैः।
शुभसन्मतिधारकसन्धिजनै–र्जनसार्थगताऽऽहृतिशुद्धरवै–
रमणीयतरं वरचित्रयुतं चिरचैत्यमुदार (दीर्ण)
मतैः क्रियते ॥११॥

तदा संन्मान्यं तद्यदि च विधिना वृद्धरुचिरं,
मनोज्ञं चैत्यं चेत् परित उदिताचारततिवृतम्।
न चास्थाने सन्तो विहितविविधाचाररतयो,
रतिं स्थानं शंसां विदधत उदर्था यत उमा ॥१२॥

रथ्याधूलीकीचमानैर्विशल्ये, तच्चैत्यं नो दीर्घकालीनशोभम् ।
शस्त्रं नो चेद्धारयेयुर्मनीषा, मान्यं नित्यं तन्नरैः सततं स्यात् ॥१३॥

सन्तोष्या शुचिकारवो मतिधनैर्यत्ते क्रियासुन्दरं,
चैत्यं सुन्दरचित्रराजिकलितं धर्मप्रदं देहिनाम् ।
कार्याणां रमणीयतामलमिमे कुर्युः प्रसन्नान्तरा,
यद्देहेन कृतिर्भवेद्धृद्यभूचेष्टानुगा नान्यथा ॥१४॥

बिम्बं यद्यपि शोभनं जिनपतेः कार्यं प्रशस्त्याऽधर-
स्त्रैणांह्लादकरं भवन्ति परं चैत्ये सुचित्रान्विते ।
सच्छायं प्रणिधीयते न निपुणानन्दप्रदे मरुस्थले,
नो भर्त्त्रे प्रतिमहरद्विधिवशः साक्षात्समालोकनात् ॥१५॥

चैत्येऽधिनियते जिनस्तवनुगा चैत्ये क्रिया चित्रणे,
नो चेद्धास्तरं भवेन्न स्थलं तुष्टं भवेत् प्रेक्षिणाम् ।
तत्तत्कारणयोगिनो जिनपतेराश्रित्य तिस्रो दशा-
स्तोष्टव्यास्तदनुश्रिते प्रकरणे सरेऽपि सत्कारकः ॥१६॥

बिम्बं रत्नसुवर्णराजतकृतं नास्माद्विशिष्टा नृणां,
चित्ते शान्तिरनुत्तरा भवति तु सौन्दर्यसत्त्वान्वयात् ।
तत्तत्कारव उत्तमेन धनिनाऽऽज्ञाकारसिद्धश्च ध्रुवं,
सत्कार्योक्तिदशागते प्रकरणे स्याद्बिम्बशुद्धिर्यथा ॥१७॥

यथा नृपाणां प्रजया प्रमोदा-द्राज्याभिषेके विविधक्रियाभिः ।
कृते सदाऽऽडम्बरराजितामी-राष्ट्रे महत्त्वं वचनातिगं स्यात् ॥१८॥

तथाऽर्हतां रम्यतराणि विम्बा—न्यशेपकारुक्रियया कृतानि ।
विना प्रतिष्ठाविधिमार्हतानां, पूजाऽऽस्पदत्वं न हि जातु यान्ति ॥१९॥

चित्रैः सुरम्ये विहितेऽथ चैत्ये, दशाहमध्ये क्रियते प्रतिष्ठा ।
प्रभोर्न चेत्तद्भवनं मनोज्ञं, रक्षोऽधमैः शीघ्रमधिष्ठीयेत ॥२०॥

अर्हच्चैत्यप्रतिष्ठासमयमनुसृतं वस्त्रशृङ्गारकार्यं,
नादग्रं धर्माङ्कवद्धं विविधवधयुतेऽमारिघातो निकेते ।
सन्मानः सर्ववर्गे विविधगुणधरे श्रावकाद्यर्हसङ्घे,
कार्यो यत्तं निधायाऽव्ययपदगमनं धर्मप्राप्त्यै विशेषात ॥२१॥

उक्तं यच्छास्त्रकारैः परिणतिवशतो ह्याश्रवा निर्जराङ्गं,
तत्सत्यं यज्जिनेन्द्रो भवमुखमहसां पापबन्धो विधाने ।
तद्वत्कार्ये जिनानां प्रतिकृतिमहने विद्यतेऽङ्ग क्रियायां,
स घः सर्वोऽत्र तस्माद्विधिवदनुसरेन् सर्वशोभावहत्वम्॥२२॥

विधौ प्रतिष्ठाकृतिसंश्रितेऽत्र, कृते जिनानां महिमाऽष्टघस्रान् ।
विशेषतः श्राद्धवरैर्विधेयो. यथा मुदायै जिनविम्वचैत्ये ॥२३॥

चैत्यं विहितं विम्वैर्युक्तं, सङ्घप्रहितां पूजां प्राप्तम् ।
नाप्यं निजके धार्य सङ्घे, व्याख्या मुनिभिः कार्या सूक्ता ॥२४॥

भव्या अत्रागत्याऽनङ्गां, दृष्ट्वा मूर्तिं धर्माऽऽरामाम् ।
वोधं यान्तु प्राप्तानन्दाः, शीघ्रं यान्तु मुक्तिं रम्याम् ॥२५॥

नैवात्र शङ्क्यममलप्रतिवोधसारे—
नैवेदमाप्तविहितं करणीयमार्गे ।

शल्यादिसाम्यमुदित त्वणान्सिन्धे,
शास्त्रेषु नैव जिनविम्बगृहादिकार्ये ॥२६॥

न्ते मुनिभ्योऽशनपानखाद्य–स्वाद्यानि यो हि वधमादि कृत्वा ।
तत्रापि चेच्छास्त्रकारे प्रभूता, सन्निर्जरा तर्हि विमोहन कथम् ॥२७॥

केचिन्मुनीना स्तवमाश्रयन्त , पुष्पान्पिपूजा विहिता गृहस्थै ।
पदऽपनादन्य भनन्ति, तत्रा–धिकारियोग्यो हि निषिस्तथा न ॥२८॥

निषेधो विधिर्नो मत कर्तृयोग्यो, मुनीशो निषिद्धो गणेतन्निकार्ये ।
मुनेर्मार्गगत्या निषिद्धोऽस्ति पाठो, निषिद्धा स्थिति चलिप्की
पात्रपात्रे ॥२९॥

न्ष्ट्वा जिन चैत्यविराजित जना, व्रजन्ति राग जिनशासनेऽनघे ।
समूल एव क्षयति प्रकाम, द्विष्ट न्पक्षे खलु नीतिनाह्य ॥३०॥

जिनाय शान्तिप्रथमाननाय, नत्वा निज तद्वन्तिागमाय ।
भवेत्प्रवृत्तो नर आत्मतायी, प्रकृष्टशत्रो पदमाश्रितो यत् ॥३१॥

एवा नतिर्या जिनराजभानवे, कृता नरै साऽष्टविधान्धतामसम् ।
निहन्ति यत्र हतो दिनेश–प्रभाऽत्सा स्याचिमिरावलीनाम् ॥३२॥

पूजामष्टविधा यथाविधमति प्रात स्वकीये गृहे,
चैत्य याति मनोहर पुरगत श्रीसङ्घसत्ता श्रिते ।
प्रत्याख्यानपरो विधाय गुरूणामाचारचर्यां वर्ग,
मध्याह्ने प्रतिलभ्य साधुनिचय जैनोऽशन खादति ॥३३॥

सन्ध्यायां गुरुसाक्षिकीं विधियुतामावश्यकीं सत्क्रियां,
ग्लानत्वादिदशाश्रिते वरगुरौ विश्रामणामाचरन्।
स्वाध्यायं परमं विधाय जिनराट् चैत्येऽर्चनां सम्मदान,
कृत्वाऽऽयाति निकेतनं शुचितनुः ( स्मृतिधरो ) जैना
नयेद्यामिनीम् ॥३४॥

जैनश्चेत् प्रवलाघसन्ततिभरात् क्षीणेऽथ रिक्थेऽथवा,
हेतौ वा समुपस्थितेऽपरतमे देशान्तरं गच्छति।
जानीते स्वकमन्तरायमुदितं लाभादिघातोद्यत.
क्षीणं नैव भवेत्तकद्यदि परं, लाभो महान् धर्मगः ॥३५॥

जैनो देशान्तराणि व्रजति यदि तदा चैत्ययुक्तं निवासं,
गत्वावश्य सुचैत्यं मुनिगणसहितं याति नत्वाऽन्यथा न।
पश्चात् संसक्तिरेभिर्भवति यदि परं स्मारयेद्वन्दनं तत्,
स्यादेवं जैनमार्गो मिलितविमलहृद्धारकः शासनस्य ॥३६॥

श्राद्धो भवेज्जिनवरार्चनवुद्धिपूरो, नैतच्च चैत्यजिनविम्वयुगं विहाय।
तच्छ्राद्धधर्ममतयः प्रतिपाटक हि, कुर्युरत्वदो जिनमतेऽतितरां
हिं रक्ताः ॥३७॥

एवं विवुध्य विवुधैर्जिनरिक्थमेतत्, सङ्घाय दिष्टममलाय शिवोद्यताय।
तद्वर्धनावनविनाशफलं प्रदर्श्य, त्रेधं गृहेऽर्चनविधौ सकले च योगि॥३८॥

यो वर्धयेज्जिनधनं प्रवरोपयोगं, श्रीजैनशासनगतोन्नतिसूत्रधारम्।
सज्ज्ञानदर्शनचरित्रविकाशधुर्यं, प्राप्नोत्यसौ जिनपदं प्रथितं
पृथिव्याम् ॥३९॥

द्रव्य जिनस्य न भवेदपरिग्रहस्य, भक्त्ये गृहीतममलेन हृदा जिनस्य।
वृद्धौ जिनेश्वरजनोन्नतिके ऽस्य भावी, सच्छासनस्य भुवि वर्त्तयिता
न चित्रम् ॥४०॥

चैत्य बिम्ब जिनस्य प्रभवति सकले सम्भेद हिताय,
बाला वृद्धा युवान सुकृतमतिधरा स्वीययोषाभिरत्ता।
जाता धर्मेन देशे प्रचुरनिचयिनोऽनाथधामाभिलाषा,
लाभ नोपेलभन्ते जिनपतिपठित सुस्थित तद्धि दृष्ट्वा ॥४१॥

तत्सर्वं रम्यताया जिन-जिनगृहयो सुस्थितत्वोद्भवाया,
सा स्यात्तद् द्रव्यसिद्धेरिति सुकृतभरा वर्धने यद्धक्ष्या।
न्यायेनाऽऽरम्भशून्या गतनिपयरथा धर्मभात्राथवान्छा,
सर्वेषां मुक्तिकाङ्क्षा जिनपन्मतुल नाङ्कृत यद्वदन्ति ॥४२॥

ये सत्वा नहि तादृश धनबल युक्तिप्रयोग फला,
वुध्यन्ते प्रबल च नो कथमपि वृद्धे पर कारणम्।
द्रव्यस्य तत्र नरान्नन्दने स्यु सोद्यमा मुक्तये,
सत्पापुपकारस्य विधिना मुक्ति लभेरन् लघु ॥४३॥

ये तु प्रोत्कटमोहराजजनितप्रावल्यभानो नरा,
मिथ्यात्वाऽऽकुलचेतसो जिनधन तान्क् प्रभावा यतम्।
नो वृद्धि न च रक्षण प्रतिपन्न नेतु प्रवृत्ताऽऽन्त्रा,
भक्षन्ति प्रमत्ता परेश्च निहते नो वारितु सादरा ॥४४॥

ते धर्मस्य निबधन स्थितियुत निर्णाशयन्तीतरे,
त्र मोह समुपार्ज्य दुस्तरतर प्राप्स्यन्ति दु खान्विता।

संसारेऽधमवृत्तयो नरकगा दुःखेन बोधि परं,
जन्मन्यासुरभावनोद्यतहृदो नैव शिवश्रीश्रयः ॥४५॥ युग्मम्

श्रुत्वा फलं जिनपतिद्रविणे प्रवृद्धे, रक्षागतं न मनुजाः शुभबोधशून्याः ।
पूजादिकार्यविधिषु द्रविणं व्ययन्ते, ये तेऽपि नैव विधिमार्गपराः समेषु ।
चैत्येषु बिम्बसहितेषु यथार्हमाधाः (मर्घ्यम्) ॥४६॥

देशप्रदेशेषु परापरेषु, बिम्बानि चैत्यानि पुरातनानि ।
दर्शं दर्शं भव्यजीवा अनेके-ऽवापुर्बोधिं तद्भृतश्च स्थिरत्वम् ॥४७॥

प्रमादतोऽकारि सुसंयतेना-ऽकृत्यं कदाचिन्न च तत्परेभ्यः ।
गीतार्थसंविग्नमुनिभ्य आशु, निवेद्य शोध्यं परतोऽपि जातु ॥४८॥

ततः प्रत्ने चैत्ये भवति जिनपतेर्या प्रतिकृति-
स्तदग्रे शास्त्रेण स्वयमपि समालोचयति सः ।
गीतार्थः शोधीनां सकलशुचिकरान् वेत्ति सुविधीन्,
अकृत्यं निर्मायं शुचितरमनाः शुध्यति ततः ॥४९॥

पुराणानामेवं जिनपतिगृहाणां प्रतिमया,
जिनस्याख्यानां द्राग् महिमप्रततिं वीक्ष्य सुधियः ।
सदा कुर्युस्तूर्थां निरघमतमुदा पालनयुता,
लभन्ते ते प्रेत्याशुभमततर्तिं पापपदिकां ।
निहत्याऽर्हच्छास्त्रप्रथितमहिमानं शुचिपदम् । इति वा ॥५०॥

भवेद् जैनोऽसौ यः प्रतिनियतसामर्थ्यसहितो,
विधेयाच्चैत्यानां विविधघटनां बिम्बसजुषाम् ।

म्यय ससारा चेलरणनिपुणस्तारयति वै,
गता धर्माराम न भवति विदुषा स्वान्यनिभिन्न ॥५९॥

इति पञ्चविंशोऽध्याय ॥

---

। षड्‌विंशोऽध्याय । ( ज्ञानाधिकार )

जैनोऽसौ नियत तनोति मतिमान् यो ज्ञानकार्यं सदा,
जैन यद् भुवि शासन विजयते ह्त्वान्यतीर्थप्रभाम्।
सोऽनर्घा महिमा प्रचण्डतरको ज्ञानप्रभावोत्थित ,
प्राप्तेष्वन्धनरेषु यद्बहुतरेष्वीश्वाधर श्लाघ्यते ॥१॥

ज्ञानेन जात भुवि जैनतीर्थं, ज्ञानेन तत्स्थापितमर्हता पुन ।
ज्ञानप्रवृत्ति भुवि जायमाना-मपेक्ष्य तीर्थं जगतीह वर्तते ॥२॥

ज्ञानस्यैव मह परात्परतरो, जागर्त्यनून पर-
स्तीर्थेशा परिपत्सु यत्कृतधराश्छद्मस्थभावान्विता ।
गन्धेशा श्रुतकेवला निखिलविद्वृन्दात् पुर स्थानगा-
स्तानादौ च नमस्करोति निखिल शेष सभासज्जन ॥३॥

मुनीश्वराणा गणनायकत्वे, स्थाप्ये मता या निखिला गुणालि ।
सर्वाऽपि सा युक्ततमाऽपवादे , पर श्रुताऽऽचारगुणे त्वसौ न ॥४॥

क्रियाविहीनेऽपि मुनौ जनाना, मिथ्यात्वभावो न तथाकृतिश्चेन् ।
गीतार्थताया सुमुनौ ( च ) तद्वद्, भवेन्य चेच्छुतधारको न ॥५॥

गीतार्थनिश्रामभिहत्य ये स्युः, क्रियापराः संयमिनः प्रभूताः।
तेष्वंश एकोऽपि न संयमस्य, ज्ञात्वेदमार्यः श्रुतसाधनो भवेत् ॥६॥

भेदाः पञ्च ख्यातिमन्तो बुधेषु, ज्ञाने गीताः शास्त्रकारैर्हिताय।
मत्याद्यास्तु व्याहृतिस्तस्य शास्त्रे, कालाद्येषु गीयते शास्त्रनिष्ठा ॥७॥

जैनैः पर्व राध्यते ज्ञानसत्कं, पञ्चम्यां वै शुक्लपक्षोपगायाम्।
तत्र स्थाप्यं शास्त्रवृन्दं पुरस्तात्, तस्याग्रे श्रीसङ्घ आप्नोति धाम ॥८॥

वर्षाऋतौ स्याद्वरपुस्तकाना-मार्द्रत्व तद्धेतु विकुत्थनादि।
तत्सारणादावधिकः प्रभावो, मत्वा श्रुताराधनमिष्यतेऽत्र ॥९॥

तदाश्रया कार्तिकपञ्चमीयं, मता जिनेशानुगतैः समस्तैः।
पर्यायभेदेन मता ततोऽसौ, सौभाग्ययुक्ता श्रुतपञ्चमी वा ॥१०॥

चिरन्तनानां यतिनां न काचित्, पुस्ताद्यपेक्षा स्मृतिपाटवानाम्।
तथापि तत्रामलशास्त्रपद्धति – गीतार्थताहीनजनोपयोगिनी ॥११॥

देवेन्द्रयुक्ताद्गणिनः पुरस्तादा-ऽऽसन्मुनीनां वचनानि मानम्।
परं परस्तात् स्मृतितानवानां, पुस्तानि सर्वेभ्य उदारमानम् ॥१२॥

ततोऽधुना नैव वचांसि मानं, न बिभ्रतीष्टं शुचिपुस्तकानि।
महामुनीनां गुणगह्वराणां, नासम्भवी यत्स्मृतिलोप उग्रः ॥१३॥

प्रवक्तुमेतद् यदि नोचितं न, प्रवच्मिनिःशेषमिदं हि शासनम्।
लेखान् सुपुस्तप्रथितान् विहाया-परेण नैव ध्रियते कथञ्चित् ॥१४॥

यदा स्मृतीहाधरणादिमेधा-प्राचुर्ययुक्ता मुनयः प्रशस्ताः।
तेषां तदा पुस्तकसङ्ग्रहस्य, परिग्रहः कारणमेव नान्यत् ॥१५॥

मेधा यदा हीननरा मुनीना, कोशाय निर्युक्तिपुरग्रहोऽभूत ।
हानिर्यत्न तत्र बभूव भूरि-स्तत्र ममभवय बभूव सङ्ग्रह ॥८६॥

यथा ह्यचेलत्वधर्मे हि वस्त्र, परिग्रह स्यान्मुनितापदाङ्गस ।
परेपु यत्सयमसाध्यता स्यात, तेषा ग्रहान्चीवरभाननादे ॥८७॥

अतोऽधुना पुस्तकसङ्ग्रहो य , स एव बोध जनयत्यनूनम् ।
धरति चेत्तानि न पुस्तकानि, हास्यान्मित्ता मुनयो
भ(वेयु) बन्ति ॥८८॥

ततोऽधुना ज्ञानगुणेऽमुना मदा, काय इय ज्ञानपदाहणायाम् ।
आराधना ज्ञानपदस्य जाप-ध्यानादिभि पञ्चपदानि लाना ॥८९॥

अन्त्य मुनीभ्योऽमलपुस्तकाना, विस्तरनामर्चनमारचय्य ।
समर्पण वाचनमन्ययुक्ति-ह्युपकाराय सता प्रयोज्या ॥॥९०॥

न त्र्गन शास्त्रविहीनमार्गे शास्त्राणि सर्वाणि समाश्रितानि ।
सुपुस्तकालि गणिना वरेण, ज्ञातु स्वकान्यानि निदेशनानि ॥९१॥

धार्याणि निश्शेषमताश्रितानि, तत्कालकालान्तरपुस्तकानि ।
गणी भवेत्तेतरथा स्वकान्य-मतोऽग्रहे शक्तिधर प्रकाशम् ॥९२॥ युग्मम्

यावत्तीर्थ जिनस्य प्रचलति भुवन तावदपोऽपि सङ्घो,
यावच्चाऽसौ जनेषु प्रकटतिमिरहा तावदर्हच्छ्रुतानाम् ।
तत्त्वाना सज्जकस्यानवमपरधृतिप्राप्तिहेतुत्वमाप्य,
तानि स्यु पुस्तकाना निचयमनुमतान्यर्चनीयानि मर्त्यै ॥९३॥

अन्त्याऽऽवर्तप्रमिते (माणे) भवगतिगमने शेप आप्नोति मार्गं,
भव्यो जीवः प्रभावात् सुकृतनियतितो जातकालात् प्रधानात्।
तत्रानाभोगवान् सन् प्रचरति जिनपोद्भाविते यद्वदन्धो,
सद्भाग्यो भव्यजीवश्चरति गतपथो सार्वदेशितमार्गे ॥२४॥

तद्वज्जीवोऽपि मार्गे यदि व्रजति पथि ज्ञानहीनस्तदापि,
देवाद्यर्चादिवत्सोऽनुगतविमलभा लेखयेत् पुस्तकानि।
अभ्यर्च्याशेपशिष्टद्रविणनिचयतः सद्गुरुभ्यः समर्प्य,
सत्याप्य श्रोतृकार्यं गुरुवचनसुधापानमादत्त उच्चैः ॥२५॥

देवो गुरुर्धर्मवरश्च बोध्या-न्येपां समासाद्य ऋतां प्रमाणाम्।
व्याख्यात्रधीनानि यथा श्रुतानि, विशेपतोऽमूनि तथाङ्कितानि ॥२६॥

तथापि बाहुल्यमनेहसीय-प्रभावतो बुद्धिधनस्य विस्मृतेः।
कुवादिनां कल्पितपाठवादिनां, विलोपकानां च न विद्यतेऽन्तः ॥२७॥

एतादृशेऽनेहसि मार्गरक्ताः, कथं श्रयेयुः शिवशुद्धमार्गं।
अतो विसंवादहरानऽभिन्न-रूपान् सुपुस्तान् भविनोऽर्चयन्तु
त्रिभिर्विशेषकम् ॥२८॥

निशम्य पैशाचिकवृत्तमार्त-स्नुषाकथां च व्रतिनः स्वशुद्ध्यै।
क्रियातिरिक्ते समये विदध्युः, स्वाध्याय एषोऽपि सुपुस्तकाश्रितः ॥२९॥

एवं च ये स्युः सततं समुद्यताः, स्वाध्याययुक्ते वरधर्म्यचित्ते।
सुपुस्तकानां धरणे प्रवीणा, ध्यानेऽन्यथा बाध उदियात् प्रचण्डः ॥३०॥

तीर्थाधारतया सुपुस्तनिचयस्तेनैव मल्लप्रभो-
र्देव्यानीत उपाय आगमविधौ पुस्तस्य वर्षावधिः।

सिद्धपे प्रतिबोधनाय गुरुणा रत्तस्य बोद्धे मते,
न्यस्ता सु दरपुस्तिकाऽस्य निमले जैनेन्द्रधर्मे मति ।
पूज्य-श्रीहरिभद्रसूरिरचिताऽस्याऽऽलोकनेऽजायत ॥३२॥

त्रिधोदिता जिनागमा अनन्तर-परम्परा-
ऽऽत्मस्वरूपभेदत पुनर्द्विधाऽर्थसूत्रत ।
द्विधाऽपि वर्ततेऽधुना परम्पराभिधानको,
जिनेन्द्रशासने सुने परम्पराविहानित ।
सुपुस्तकाश्रितस्तत स एव पूज्यतामिह ॥३०॥

सत्यैव शासनस्यानुपमहितकर पुस्तक तत्पुरोगै-
र्भक्ति कोशा कृता सत्पुरुषरचनत शासनोद्वेजनाय ।
नैरे श्राद्धोत्तमास्तु विविधविधियुतान्याचरन्ति प्रकाम,
तत्तद्वैचित्र्यभाग्सु तप उन्यकृते यापने वह्निलेरान् ॥३३॥

यथा जिनेशभक्तित बहुप्रकारिकार्चना,
जिनेश्वरेषु पूजने तदीयबिम्बसहते ।
तथा जिनेशशास्त्रवृन्दभक्तिभाविता जना ,
सुशास्त्रबोधिनस्तदाश्रयांश्च पूजयन्ति वै ॥३४॥

अत श्रुते समीरित त्रिधाऽऽश्रुतेर्विवर्धन,
साधनाच्च बोधि-बोध-सद्गलाऽङ्गसहते ।
अय [illegible] चेत्समीहते प्रकाममात्मकाम्यया,
विपूजय तदाश्रुते क्रियात सुपुस्तकान्वयात ॥३५॥

चैत्याना नूतनाना वितनुत उदिता सत्क्रिया यद्वनाम्ना,
उद्धार प्राक्तनाना विविधपुरयुजा तन्यते भक्तिनघ्ना ।

बिम्बानां नव्यजीर्णप्रकरणनिपुणा उद्यमं सन्दधन्ते,
सङ्घे जैनेशनम्ये बहुविधविनयं सन्नयन्ते सुधर्माः (बोधाः) ॥३६॥

सर्वोऽप्येष प्रभावो मुनिवरसजुषः सङ्घसार्थस्य तीव्रो,
भेदैर्युक्तश्चतुर्भिः श्रमणमुखगतैः पुस्तकाधारजीवैः ।
व्याख्यानं सत्क्रियायुक् प्रवितरणचणैः शासनस्तम्भरूपै-
र्युक्तस्य पुस्तभक्त्या त्रिकरणविधया संश्रितस्यैव नूनम् ॥३७॥

शास्त्राणां विहिता वरा सुरचना पुस्तेषु विज्ञोत्तमैः,
सा चेद्बाधमियर्ति तर्हि जिनपस्याऽभूत्परं बाधितम् ।
सर्वं यद्धरति प्रकृष्टमनिशं सर्वत्रगं सद्यशः,
सूत्राणां मितबाधने परममुष्मिन् धर्मवार्ता वृथा ॥३८॥

ज्ञानं सर्वमतानुगैरभिमतं धर्माहतौ सारभृज्,
जैना अप्यभिमन्वते परमिदं तत्त्वाशया नो परम् ।
जैना यच्छिवसाधनं परतरं मन्वन्त उद्धारकं,
ज्ञानं सत्क्रियया युतं न विकलं चैकं ह्यपीप्स्यप्रदम् ॥३९॥

रोगी नैव निदानरूपभिषजां रोगस्य बोधाद्भवे-
दल्पेनापि गदेन मुक्ततनुकश्चेन्नागदानां क्रिया ।
वार्धेस्तारकतां श्रितोऽपि पटुधीश्चेत्तारणे नोद्यतः,
पारं नो समियर्त्यसौ नदनदीष्वेवं क्रियाऽऽवश्यिकी ॥४०॥

युक्तोऽपि क्रियया विचित्रविधया रत्नाकरेष्वागत-
श्चेन्नासाववबुध्यतेऽत्र पतितं सारं गतार्घं च वा ।

तत्त्रागतिरस्य मुग्धहसनी सिद्धिर्न काचित्परा-
प्यथाऽस्य सकलप्रयास इह चाऽज्ञानिक्रियाया सम ॥४१॥

प्रागुक्त श्रुतधारकै श्रुतिपन्य सयत सयत ,
गत्या स्थान उदाहृतौ शयविधौ वान्यासनेपूद्यत ।
घ्नन्नात्येप (न) पापमण्वपि यतोऽसौ रक्षक प्राणिना,
चेत्प्राणान्तमिता परेऽसव इव पापाय नो तादृशे ॥४२॥

एव नो विधितत्परोऽपरमुनि साध्य विहायाऽऽत्मना,
कुर्यात्ता परमप्रमादसहिता हिंस्यान्न जन्मान्ययान् ।
जात्वेपोऽघनितानसञ्चितिकरो रक्षाविधौ न यत,
एप यत्नपर परेऽत्र न मृता स्वायु समर्था यत ॥४३॥

क्षुद्रैर यच्च आदृतिप्रचुरताभागाह शिष्य परो,
नो ज्ञाने शिवकाङ्क्षिणा मतिरत कार्या फलेनोज्झिता ।
आहात्रान्तिपदा सदा हितविधावालस्यलेशोज्झितो,
यो जीवेतरसार्थबोधरहितो रक्षोद्यत किं भवेत् ? ॥४४॥

तज्जीवेतरनरतुष्टन्यविपय ज्ञान पर धारयन्,
पुण्यापुण्यविधानबोधजनित मुक्त्यन्तसौख्य श्रयेत् ।
तस्मात्तम शिवधाममार्गनिपुणैर्ज्ञान परश्रेयसे,
ग्राह्य यज्जिनशासन द्वययुत स्याद्यव्ययाप्तिप्रदम् ॥४५॥

श्रीजिनशासनमतेऽत्र नराश्चतुर्धा, ज्ञान तु केवलमुपासतमुज्झितेयम् ।
हीना क्रिया पर इयन्ति परा प्रवृत्ति, द्वौ चापरौ गुणविशेषतया द्विक तु,
नैतपु कश्चन नरो जिनमार्गमेन ॥४६॥

ज्ञानक्रियोभयगताः पुरुषेषु भङ्गा, यत्ते नरेषु भजनापदतो विभातः।
ज्ञानं लभेत पुरुषः प्रचुराघभेत्ता, बन्धोऽपि जातु नहि ग्रन्थिपरो हि तस्य ॥४७॥

नैति क्रियाकृतिमसौ मतिरस्य तद्वा,
तेनायमेति पदमाराधनया प्रभूतम्।
जैनीं क्रियां प्रविदधान उपैति मार्गं,
योग्यत्वमस्य न तु सको नियमात्तमेति ॥४८॥

भव्येतराः केचिदिमां समेता, न तेऽत्र भव्या अपि मार्गहीनाः।
आराधना तस्य भवेद्धि न्यूना, मार्गेण हीना इति दृष्टताङ्काः ॥४९॥

ज्ञानं क्रियां चापि समेत्य युग्मं, सम्यक्त्वचारित्रयुजः पुरुषाः।
मार्गं जिनेशस्य यथास्थितं ते, मोक्षं लघूद्यान्ति विशुद्धभावाः ॥५०॥

जैने कुले ये जनिमादधुस्ते, यावन्न तत्त्वेतरभावविज्ञाः
वृद्धानुवृत्त्या क्रियया विदा च, वृतास्तथाप्यत्र न ते प्रमाणम् ॥५१॥

क्रियायुतो ज्ञानपदार्थशून्यो, निवेदितोऽरण्यगतोऽक्षिहीनः।
निर्युक्तिकारैः प्रसभं द्वयोस्तु, समत्वमाश्रित्य युगादराय ॥५२॥

द्वयोः परं साध्यमपेक्ष्य तैर्हि, चारित्रहीनः कथितः खरैः समः।
ज्ञानं तु दीपैस्तुलितं प्रधानं, ज्ञानक्रियाभ्यां सहितोऽर्हपूर्गः ॥५३॥

समस्तकर्मक्षयतो विमुक्तिः, श्रेणिप्रभावात्स भवेन्न सा तु।
कैवल्यहीने शिवसाधनं तद्, ज्ञानं सदा श्रेयमिदं तु भव्यैः ॥५४॥

मार्गत्रय सम्मिलिता निमुक्ते , सम्यक्त्वबोधव्रतरूपवन्त ।
सम्यक्त्वलाभात्प्रभृति क्रमोऽत्र, तत्त्वार्थबोधेन विना न निश्चिति ॥५५॥

ज्ञान कुलाचारत एव यस्य, तस्यास्ति साध्यत्वमुदारदर्शने ।
यस्त्वान्धिमो स नरो लभेत, ज्ञानाद्धि सम्यक्त्वगुणस्य लाभम् ॥५६॥

जिनेश्वरा यद्यपि गर्भकाला–द्विशिष्टसम्यक्त्वधरा ध्रुव स्यु ।
ज्ञानत्रय तत्र तथापि शस्ता, जैनै कृता प्राप्नुत इन्दुसाम्यात् ॥५७॥

परित्यजन्ति तीर्थपा समग्रपापभाजन,
गृह धनाङ्गनासुतान्सियुत स्वबोधत ।
तदैव तुर्यमाप्यते समेर्मन सुपर्यय,
न जायतेऽद आश्रितेष्वगारमात्मभावत ॥५८॥

कृते तु दीपेन गृहे प्रकाशन, धूलीप्रमुखस्य विशोधन परम् ।
न चेद्भवेत् तत् प्रथम तन्न पुन , सुवर्णरूप्यादिरपोहित भवेत ॥५९॥

तथैव बोधेन विना कृत तपो, भवेदकामेन युता विनिर्जराम् ।
हेतु प्रति, प्रातिरतो न मुक्ते–रान्येयहेयार्थविदा न तत्र ॥६०॥

निरोध कृतश्चेन्न नूत्नाहसा त्रा, पुराणाघनाशोद्यम आत्तरूप ।
यथार्थपापप्रचयक्षय स्या–द्विबुध्य तत्तत्करणिं निरुन्ध्यात् ॥६१॥

उद्यमो यदि कृतो मनस्विना, सयमे तपसि च श्रुतागमे ।
निवृति फलदे पुन स तु, ज्ञानिनोऽन्यथाऽन्धनृत्यवत् ॥६२॥

ज्ञानेषु पञ्चसु पुन श्रुतमेकमेव,
व्याख्याति रूपममल स्वपराश्रयाङ्कम् ।

मूकानि शेषमतिमुख्यविबोधनानि,
स्वेषां न रूपममलं वदितुं क्षमाणि ॥६३॥

ज्ञानं यद्यपि केवलं वरतरं सर्वार्थबोधान्वितं,
नित्यानन्दसमन्वितं नियतताभ्राजिष्णु सर्वोत्तमम् ।
मेरौ काञ्चनसन्ततेः सममिदं लोकोपयोगोज्झितं,
तत्स्वर्ण खनिसम्भवाभमनिशं श्रोता श्रुतं संस्तुयात् ॥६४॥

कालोऽयं कलिसङ्गितो न च नृणां ज्ञानानि शेषाणि वै,
नैवाकाशविचारिणां गतिरिहासत्त्वं च लब्धिस्पृशाम् ।
मेधा नैव तथाविधा गणभृतां सद्योगयुक्तात्मनां,
तुल्या, शासनमार्हतं विजयते सामर्थ्यमाप्य श्रुतात् ॥६५॥

जैनेन्द्रशासनमिदं सकलान्यतीर्थ्य-
न्यत्कारकारणसहं जयतीह लोके ।
सर्वोऽप्ययं लिखितशास्त्रभवोऽनुभावो,
ज्ञात्वेदमत्र लिखनेऽलसिता सतां का ? ॥६६॥

जैनाऽसौ वरभक्तिभाग् वितनुते नित्यं महं ज्ञानगं,
तत्रापि श्रुतलेखनावनविधौ जैनेन्द्रबिम्बेष्विव (म्वाधिके) ।
देवा यद्वदवाप्य जन्म झटिति श्रौतीं सरन्त्यर्चनां,
तद्वद्यः प्रतिवासरं वितनुते श्रौतीं सदर्चा मुदा ॥६७॥

इति षड्विंशोऽध्यायः ॥

---

। सप्तविंशोऽध्याय । ( श्रमणाधिकार )

जैनोऽसौ जिनशासनाधिगमतो जन्म स्वकीय सदा,
धन्य मन्यत आत्ममुक्तिपरम नालीतरच्छासनम् ।
पूज्यत्व जिनशासनस्य सकलज्ञोपाहृतात सर्वदा,
जीवाना हितदर्शनान्घटितानुस्तेर्मुमुक्षुमहात्   ॥१॥

दवो रागविनाशकृन्मपि न सत्याधोर्दिशेच्छासन,
ज्ञानादित्रयसयुत विरमण पापेभ्य आरयाञ्जने ।
विद्वत्तु प्रतीत पद प्रथमत स्याद्दशकम्मगुतो,
नो चेदेष्टरि नतरे च विभिन्न नैनार्हणा सन्नृणाम्   ॥२॥

आत्मा येवलल्धिमीलनपर स्याद्रागरोपाग्निजिद् ,
यस्माज्ज्ञानन्दोन नश्यत इहावृत्यो कपायान्वित ।
न धौ नेन निगच्छतो भवकरेऽनिष्ट कपायान्वये,
तत्संनरल्यधरो जगत्पतिरसौ श्रीवीतरागो जिन   ॥३॥

महत्त्व जिनस्यास्ति यतोऽखिलार्थान , समत्वेन वेत्त्येष सामान्यरूपान् ।
प्रथमपधारांस्तु वक्ति प्रकृष्टान् विशेषान्विताऩ् युग्मरूप पदार्थ ॥४॥

धम्मा यथा स्याद् ऋजुतान्विताङ्गुलि , नष्टा स्थिरोत्पादयुता तु सन ।
तथ प्रभु कालभिन्नोत्थितानां, वक्तीह पर्यायनाश्रितानाम्   ॥५॥

द्रव्याभिधानेन समूहमेव, स्याद्वाद त्यास्मि पदार्थरूप ।
मुख्यात्पर नित्यसत्ता परेत्रे, स्वस्मिन्ननित्ये न हि शुभदा स्यु ॥६॥

भिन्ना जीवा भवेयुर्यदि न हि करणैर्ज्ञानसौख्यादिभाजो,
घातस्य प्रेत्य जन्मासुभृन इह नहि प्रेक्ष्यत किं तु दृष्ट ।

जीवे यातेन वेद्यं करणविधिगतं वेद्यते प्राणधर्ता,
भिन्नाऽभिन्नस्वरूपौ तदिह किमुत न जीवकायावपीष्टौ ॥७॥

समस्तमस्तीह जगत्स्वरूपे, सदन्यभावेन सदेव न स्यात्।
नोभात्मरूपे विषयस्य भेदो, यदिन्द्रियैर्गम्यत आत्मगम्यम् ॥८॥

सर्वादिसामूहिकशब्दयोगे, वाच्यं समं नैव तथा ह्यवस्थाः।
जीवेषु सर्वेषु गुणाः समस्ता, नाऽजीवगास्ते निजरूपनिष्ठाः ॥९॥

कर्मावृतत्वात्कृतिरेतदुद्भवे, कार्यं ततस्तद् द्वयरूपमेव।
स्याद्वादमेवं जगतो विबुध्य, दिदेश नाथो भविकान्मुच्छिवाय ॥१०॥

नैकस्य सर्वज्ञदृशेति शिष्यान्, जगाद निश्शेषविदे सुमार्गम्।
सर्वे लभन्तां शिवमित्थमुग्रं, जिनेश्वरीयेषु नृषु स्वतत्त्वम् ॥११॥

द्दिष्टो यद्यपि सर्वभावविदुषा मार्गः कषायोज्झितो,
नायं सिध्यति साध्यते क्रममृते तद्धेतवः साधकाः।
द्दिष्टास्तत्क्रमशः समुन्नतिमयाः शिष्येभ्य एतत्पदे,
येनाऽशक्यमिदं समस्तकलनं त्वेतद्धि नो स्याद्रुचि ॥१२॥

न नित्य आत्मा न च नाश्यनुक्षणं. ततोऽस्य सिद्धत्वमसम्भवन्न।
नैरात्म्यवादे न किमु प्रभावो, नश्येन्न पश्येदिति शल्यनाशः ॥१३॥

निरीहतायां न सतोऽपि रागो, वैराग्यनिष्ठो न च दुःखरोपी।
आत्मा स्वभावेन युतो न सुख्यपि, स्वरूपरक्तस्य न मोहहेतुः ॥१४॥

स्वरूपमालिन्यमतो न तस्य नैर्मल्यसिद्ध्यै खलु मार्गदृष्टिः।
साध्यत्वमस्यैव तदीयजीवे, तत्रैव सम्यक्त्वमदर्शि विज्ञैः ॥१५॥

माध्ये निश्चित उद्यमो नु विदुषा मोक्षे त्वनन्यात्मक-
श्चारित्र ह्य उद्यमो न च फलेज्ज्ञान विना कस्यचित् ।
हेतो साधनबाधनप्रचयगं कर्मागमोद्योतने,
साधनबाधकसार्थग भवति तत्कर्मागमोद्बाधने,
ज्ञातव्यानि ततोऽघसङ्गमहृतौ रूपाणि सत्त्वोद्धुरे ॥१६॥

मत्वैव जिनराड दिदृश भविन सम्यक्त्वबोधव्रता-
न्यन्ये तद्विधबोधवृत्तरहिता देष्टु न चैव क्षमा ।
तत् ससारसमुद्रवाहनिरतोऽनादेरसौ नासन्त,
पुण्योदेनापर समस्तविदुन्मोह जिन दुगत ॥१७॥

मत्वैव भववारिधे परतट गन्तु मुनीन्द्रो जिन,
दातार शरणस्य कर्मकटकात त्रातारमाशिश्रियत् ।
सेनानी सुभटान् रणाङ्गणभुवि प्राप्तश्रिय स्याद्वल,
कर्तुं चेत्सुभटा रणोद्यमपरा अत्रोद्यमस्तद्धित ॥१८॥

मत्वेति प्रवरोद्यमा मुनिवरास्त्यक्त्वाऽऽश्रवान् पञ्चधा,
ससाराम्बुधिवर्धने पटुतरान् दु खैकदावानलान् ।
पोत सवररूपमाप्य मथने शुद्धे तपस्युद्यता ,
बालान् वृद्धतपस्विनश्च सतत ये स्यु सदा सेविन ॥१९॥

शिक्षासु प्रवणो भवेन्न मतिमानाऽऽरम्भत कास्वपि,
किं कर्मक्षपणाय सान्तरतया प्रारम्भतस्तत् क्षिपेत् ।
सच्चेष्टोऽपि ततो नरो धृतिपर प्रोद्युक्तयत्न सदा,
काङ्क्षी चेत् भवरम्य तस्य यतते काष्ठा परा यावता ॥२०॥

आजन्मभाविनि कलानिचये यदीदं,
किं तर्हि नैकभवसाध्यफले चरित्रे ॥
तत्राऽस्ति योगजकृतिर्वहिरात्तहेतु-
रात्मोद्धृतिः पुनरिहान्तरसाधनाढ्यः ॥२१॥

छात्रत्वं यदि न त्यजन्ति सकलां विद्यां ग्रहीतुं गता,
मन्दं मन्दमनुश्रयन्त उदितां तां शिक्षमाणा अपि ।
अव्याबाधपदैषिणोऽपि हि तथा श्रामण्यमल्पं गता,
यत्कर्माऽस्ति घनं भवैरगणितैर्बद्धं च क्षेय हि तत् ॥२२॥

ऋद्धौ कीर्तौ क्रियायां गिरिवरचटने ग्राममन्यं यियासौ,
विद्यायां गेहचित्यां क्षितिगृहकरणे कूपभित्त्यां कृपौ च ।
मन्दं मन्दं प्रवृत्तः स्थिरकृतिरुपयात्यन्त्यमुग्रेऽपि कार्ये,
किं तर्हि मोक्षसिद्ध्यै चरणमनुचरन् शस्यते नात्पमिच्छन् ॥२३॥

यथा जनेषु स्खलना भवित्री, सर्वेषु कार्येषु जनप्रसिद्धा ।
तथाऽन्तरङ्गारिजयप्रवृत्तौ पञ्चेति भेदाः श्रमणत्व उक्ताः ॥२४॥

अज्ञानसंस्कारविमोहमादैः, कश्चिद्भवेद्रागयुतोऽथ साधुः ।
शरीरयुक्तेषूपकारकेषु, स संयमी सन् वकुशाभिधानः ॥२५॥

कषायदोषाद्विनिमोहनाच्च, भवेत्कषायी वितथादतिश्च ।
आचारमार्गे ( ज्ञानादिकेषु ) प्रयतोऽप्यरागे, कुशीलसङ्ज्ञः स मुनिर्विगीतः ॥२६॥

तपस्तत्त्वतः शुद्धसाधुप्रतिष्ठा—पदस्योद्भवेल्लब्धिरुदाररूपा ।
सैन्यं नयं चक्रधरस्य दाम्येन्, कुप्येत् कदाचिच्च कुतोऽपि हेतोः ॥२७॥

कर्तुं क्षमा स्याद्विकल क्षमस्तया, सभङ्गियात्र न सर्थर्धियोगात्।
एव मुनि सोऽनुगत' प्रकोप, निराधना विपशुता प्रयाति ॥२८॥

यथा सुरण मलिना दशा गता, जहाति जातिं न तथाऽनगार' ।
ल्न्ने प्रयोक्ता विजहत्स्ववेप, सोऽय पुलाकाभिधया प्रगेय ॥२९॥

हेयता सर्वथा जिनवरैर्गणधरै – र्गीतपूर्वा समस्ताऽऽश्रवाणा,
तत्र हिंसादिका नियमनै परिहृता इन्द्रियाणा निरस्यैतदर्थान्।
क्रोधमुख्यान् पुनश्चतुर उद्धरति स प्राप्तसिद्धनिर्ग्रन्थमार्गो मुनि
स्तुर्यभेदे पुन शुचितरा परिणतिं प्राप्य निग्रन्थनामा भवेत् ॥३०॥

यद्वा छेत्तो भवेद्वितोध्रुव कार्यस्य भान्यसौ,
न्छेत्तात्र तत' षपायस्य क्षयो ज्ञानावकर्मणाम् ।
एव निश्शेषभावाना ज्ञाता स्नातकता गतो,
यस्मान्न लिप्यते जातु क्षीणे कर्मभिराप्तिमान् ॥३१॥

वाद्याद्वनादे सुविनिर्गता इमे, ग्रन्थात्ततस्ते व्यवहारनीत्या ।
पञ्चापि नैग्रन्थ्यमनुश्रिता हि निशुद्धिवृद्धेनकुशाल्कि भिद ॥३२॥

गता साधकमश्रिताग्स्तमोद्धानाद् मुनित्वे भिद ,
सन्त्यन्या अपि पञ्च सयमगता सामायिकाद्या भिद ।
नैग्रन्थ्ये तु पुरोदिता भिन्न इह स्यात्सयतत्त्वाश्रया,
नोचेद्भेद उपाधिषु प्रगुणितो नाऽसौ निशोध्ये भवत् ॥३३॥

त्यजन् स्वीय गृह सर्वारम्भमूल प्रतिज्ञया,
उन्म स्वीय फकीरुर्यात तदाऽसौ सात्त्विक पुमान् ।

ज्ञानादिपु प्रतिज्ञां चेद्यावज्जीवितमाचरेत,
ततः साधुत्वमागत्य प्राक् सामायिकमाश्रयेत् ॥३४॥

बुद्ध्वा यदा भवगता गुणशून्यताऽग्न्या,
जन्मान्तकाऽऽधिदहनेन जगद्विदग्धम् ।
त्राणं गुणौघसहितं परिमुच्य धर्म,
नान्यत्ततो भवममुं परिहर्तुकामः ॥३५॥

गृहं त्यक्त्वा दीप्तालयसममिदं स्वार्थनिरतं,
कुटुम्बं पापालेर्नियतमनुभूतं भवगतम् ।
मयैवैकेनेदं विविधगतिपूद्दामदमनं,
विनैकं धर्म नो पर इह परत्राऽपि सुखदः ॥३६॥

ततोऽहं प्रव्रज्यां गुरुवरसमीपाद् वरतरां,
गृहीत्वा पापालेर्निजकमभिरक्षामि झटिति ।
विचिन्त्यैवं जीवो गुरुपदमितो याति मुनिताम् ॥३७॥

त्यागः सचित्तस्य समानभावा, भूमिस्तु भृङ्गेण धरातले शयः ।
केशस्य लोचो भ्रमणं पृथिव्यां, चर्या मुनेस्तद्धरणे गुरुः सति ॥३८॥

तं मुण्डयेच्छुद्धतमे मुहूर्ते, भवेद्विशिष्टः परिमुण्डने विधिः ।
ततो विधौ शास्त्रकृता विभिन्न–मादेशयुग्मं कथितं यथार्थम् ॥३९।

गार्हस्थ्ययुक्ता न सचेतनादीन्, बुध्यन्त आप्ता न यतः स्वधीतिम् ।
षट्कायभेदान् सविशेषबोधा–ज्ज्ञात्वा तदीयां यतनां विसेध्युः ॥४०॥

महाव्रतानामपि लब्धबोधाः, सम्यक् परित्यागपरीक्षणेपु ।
सुलब्धपाराः, श्रमणा द्वितीये, स्थाप्यन्त आर्यैश्च्छिदयाभिधाने॥४१॥

छेदोपस्थापनीयमिहितिमुधरणात् साधुपर्यायसङ्ख्या,
गण्या यस्मात्ततोऽमी व्रतपरिणतिका सद्वितीयाच्चरित्रात्।
साधूना सर्वचर्या मुनिपतिगणतद्वासिना निश्चया स्यात्,
पश्चात् प्राप्त श्रुतालि परिणमितञ्श स्यात्तृतीये चरित्रे ॥४२॥

एव श्रामण्यचर्यामनुगत उदितो मोहनीयक्षयाय,
तत्रापि प्रान्त्यभागे यदि भवति कणो लोभगो नाशनीय।
तत्राऽसौ शुद्ध आत्मा चरणमनुपम तुर्यमाधाय तिष्ठेत,
सूक्ष्मात्त सम्पराय जिनपतिचरणाद्देशमात्रेण हीनम् ॥४३॥

जिनाना चरित्र कषायैर्विहीन, यथाख्यातमेतद्धि यच्च समेपु।
समग्रा पुरोक्ता अधिकारपात्र, समाश्रित्य वर्तन्त एतच्चरित्रम् ॥४४॥

एव साध्यस्य काष्ठा विविधगुणवती लक्षणीत्थ पञ्च,
मोक्षाश्चारित्रभेदा शिवपदपथिका सयतारया वहन्त।
सर्वेऽप्येते दशापि प्रवरगुणगणा भिन्नभिन्नस्वरूपा,
श्राय साधुत्वमेपा निजकृतिसदुपामीप्यया हीनचित्ता ॥४५॥

नम्या सर्वेऽपि जैने परमपदगता ईशितारो गुणाना-
मत्ये स्थाने स्थितास्ते नतिपरसहिता सवशादस्तु साधौ।
यत्तत्रानेकरूपाश्चरणमधिगता भिन्नभिन्नोत्तचेष्टा,
सवऽप्येते समा स्युद्रमकनरपतिस्थानभेदेोऽपि नाऽत्र ॥४६॥

सर्वप्येते नम्यपादा मुनीशा, धर्मानीके स्वस्वधर्मानिरिक्ता।
मोक्षेन्माथे यद्वदभ्रा मते, नम्या गुप्या सर्वदा मन्त्रि ताः ॥४७॥

धर्मातिरिक्तं सकलं समुज्झित—मनन्तरं चापि परम्परं च ।
तेनैव शास्त्राधिगताचमीषां, स्थानं यदेते दुरितान्निवृत्ताः ॥४८॥

धर्मातिरिक्ते नहि सद्दृशां स्या—च्छ्रेयस्त्वबुद्धिर्जगतीपदार्थे ।
तथापि पापप्रवरोऽव्यवसाय इतीह नो तेप्यधिकारिणः स्युः ॥४९॥

मिथ्यादृशो जीववधेषु सक्ताः, परिग्रहस्य प्रचये च लीनाः ।
ते त्याग(मोक्ष)मार्गोदितयः समस्ताः, संसारमार्गा इति सद्भिरुक्ते॥५०॥

न काकवक्त्रे परमेष्ठिवाचो, निष्ठा वधे ये च परिग्रहे च ।
तेषां हि वक्त्रे शिवसार्थवाचो, भवेयुरा नैव च तासु रागः ॥५१॥

ज्ञानं मुनीनां शिवमार्गसिद्ध्यै, पर्यायमानेन ततो ह्यमीषाम् ।
अङ्गोदितीनां क्रियते हि दानं, नेत्थं विदन्ति प्रसभं ह्यगीताः ॥५२॥

उद्घोषणां कर्तुमलं नयानां, ये सन्नयेषु प्रसभं प्रवृत्ताः ।
आरम्भमग्ना नहि जैनवाचां, हीनां वधाद्यैर्गदितुं समर्थाः ॥५३॥

शास्त्राणां प्रथनं कृतं जिनवरैः सङ्घस्य धर्मोदधे—
रादानाय शमप्रबोधचरणान्यर्घोत्तराणि सदा ।
धर्तुं सत्परिणामरत्ननिचितैः पाठोऽपि तेषां मुनेः,
तत्तत्साध्यमृतेऽङ्गमुख्यपठनं शाठ्यं परं कद्दृशाम् ॥५४॥

मत्यादीनि त्रिबोधनानि भविनां चत्वारि सन्ति स्वयं,
जातानि प्रशमाकरं श्रुतमिदं तीर्थङ्करोक्तं परम् ।
कारुण्यं भवभावविच्युतिकरं चित्ते निधायात्मनां,
दत्तं तत्सफलं भवेद्यदि पुनरुद्यम्यते मुक्तये ॥५५॥

मत्यादय सन्तिससाधना इह, वोधा -स्वरूपेण फलेनयुक्ता ।
आदेयहेयादिफला स्वय ते, श्रुते तु चारित्रफल न चान्यत् ॥५६॥

ये त्वास्रवेभ्यो न निवृत्तचित्ता, न सवराणा धरणे प्रसक्ता ।
मिथ्यादृशस्ते मतिशास्त्रहीना-श्चक्षुर्वृथा कूपपतज्जनानाम् ॥५७॥

अध्येय मुनिभि सदा गुरुपदोराराधनात्तत्परै-
यद्वक्त्राद्विनिरेति शास्त्रममृत नित्य मृतेर्वारकम् ।
वासोऽनेन गुरौ कुले फलभर दत्ते मुनित्वे धृति,
नोक्त छेकचरस्य सयममुखो धम परार्थानितै ॥५८॥

सङ्घेऽत्र पूज्यपदवे गुणसङ्चयुक्ते,
मैच्छ्रतुर्भिरुदितेऽमलमार्गमारक्षे ।
उद्देश एक-उदित सकलाघनाश-
स्तत्रोद्यता मुनिवरास्तत्सेविनोऽन्ये ॥५९॥

दान सुपात्रमिति यद्वदित मुनीश-
स्तत् सयमस्य परिपुष्टिनिधानहेतो ॥
प्रेत्याप्तिरस्य मनुते निरघैस्तथाना-
श्चतोऽप्यते भवभवे शतशास्तथापि ॥६०॥

सुरारिरिसेरगणस्य नाथो विरत्या, हीनस्तथा श्रेणिकराजराज ।
भविष्यतस्तीर्थंकरौ तदेतत्, निनाप्तरगस्य मुनित्वदाना ॥६१॥

मुनिभ्यो नितान्त वतोतीद्धवर्गो, निदान सुराना धनिश्रावकाणाम् ।
यदाप्तपात्रोपदतिप्रधान, तेषा भवेत् सयमसाधन सुगम् ॥६२॥

याच्यं परेभ्यो मुनिभिर्यदेतद् , मुधाऽस्य हानं विहितं किमेभिः ।
दोषोज्झितं तन्मुनिभिर्गृहीतुं, युक्तं यतो याचितमेव तेषाम् ॥६३॥

अकल्पितं न लभ्यते परं पचिक्रिया यदा,
मनो दधत्तु साधुपूद्यतं तदा तु दोषितं तकत् ।
अरण्यसूतकादिकेऽपि दानशून्यपाचनं,
ततश्च शक्यतोत्थितो मुनीशधर्म आहितः ॥६४॥

फलं दातुर्दानात् परिणतिदिशामाश्रितमिति,
मुनित्वाप्ति प्रेत्याप्स्य—इति मनसा ह्यभिलपन् ।
असौ दुष्करकारस्त्यजति च सदा दुस्त्यजमिदं,
न जात्वर्थ(र्घ) लेखे लभत उदितं लेखविगतम् ॥६५॥

दाता चेद्भवतीदृशो मुनिमभिप्रेत्याघराशिं क्षिपेद् ,
द्रव्यं चेद्रहितं विशुद्धिविधिना पापं क्षिपेद्भूरिशः ।
किन्त्वल्पं विदधाति नूतनमयं पापं परं नानुगं,
पुण्यं साग्रमुपैति बोधरहितो दाताऽशनादेर्मुनौ ॥६६॥

तारकं भवोदधेः समर्पकं गुणावलेः,
शोषकं तमोदले विबोधकं शमाचले ।
आश्रवाम्बुनाशने निदाघतापसन्निभं,
मोक्षसार्थवाहमेनमर्चतान्मुनीश्वरम् ॥६७॥

भवसागरतीरमभिप्लवनं वरसंवरनिर्जरणोन्मिलितम् ,
जिनमार्गमनुश्रयितुं प्रवणं परितर्पयतीह निरीहजनम् ।

शमरोधचरित्रगुणापणत शिवसाधनशुद्धसहायकृते ,
गतकाममनुश्रितधर्मपरं परिचारयतिश्रयताच्छ्रमणम् ॥६८॥

भयमाराधयेच्छिवपथं साधयेत् गुणगणाप्तिनिपुणं हृत्य धरेत्।
पापमार्गाच्च्युतं समरश्रेणिग निजरागहनग संयमधर हृदि चिन्तयेत्।
कर्मदावानले शमपयो यर्पयेद् गुणिजने मोदमनिशं मनसा वहेत्,
क्षान्तिवारानिधिं श्रुतमघ चिन्तयेन् मन्तगे नैव गमनं सुजनो धरेत् ॥६९॥

न यस्य रागरञ्जनं न लेप आश्रिते जने,
सचित्तमुख्यसाधने न सङ्गलेश आप्यते।
ज्वलँस्तपोजतेजसा दिवाकरोऽवदीप्तिमान्,
स सौम्यतागुणैर्जनेषु चन्द्र आप्तवानसुम् ॥७०॥

स ईदृशं मुनिं सदा श्रयेत भावशुद्धितो,
द्वयेऽपि याति सद्गतिं मुनीश्वरोऽथ वन्दक।
न जैनशासने मताऽधमणरीतिरल्पश,
प्रदीपकान्तिवत्समेषु जायते फलं वहो ॥७१॥

स जैन स्यान्छ्रेष्ठ प्रचुरतरगुणैर्युक्तमनिशं,
सदा मोक्षोद्योग दधति च परमानन्दकलितं।
शिवाप्त्यै सत्साधुं निजपरिकरतो वत्सलधरं,
नमेन्महत् शुद्ध निजजननफलं नापरमत ॥७२॥

इति सप्तविंशोऽध्याय ।

। अष्टाविंशोऽध्यायः । ( श्रमण्यधिकारः )

जैनोऽसौ श्रमणीगणं शिवपथोत्साहं धरन्तं सदा,
पश्येत् स्वीयकुटुम्बलोकललनावर्गान्मुदा सादरम् ।
स्वीत्वाज्जन्मन आरतोऽपरबल निश्रायया जीवित-
स्तं संरक्षणमानभक्तिकरणैः पुष्याच्च धर्मोद्यतः ॥१॥

तं रक्षेन्निजसारसुन्दरतरस्त्रीसार्थमध्ये धरन्,
तस्योपासनया स्वकीयजननं सम्प्राप्तसारं निजम् ।
मातास्त्रीभगिनीमुखः प्रतिदिनं स्वस्योक्तितो मानये-
देवं चेत्प्रविधीयते यदि तदा सच्छ्राद्धतामाश्रयेत् ॥२॥

स्त्रीभ्यः पुराऽनेकविधान् प्रचक्रुः सुदारुणान् देवनराग्रगाणाम् ।
सङ्ग्रामलक्षान् महतो भयङ्करान् योऽसौ मुरारिः समदीक्षयत
स्त्रियः ॥३॥

मात्रा पुरा सप्त वराः सुपुत्र्यो व्युद्ग्राहिताः कृष्णपुरो विमार्गणे ।
याः स्वामिनीत्वस्य कृते स विष्णुस्ता नेमिनाथं सकलाः समर्पयेत् ॥४॥

द्वारावत्या विदाहं जिनपतिमुखतो भाविनं वेदयित्वा,
शाम्ब-प्रद्युम्नहेतोर्मरणमुखकृतोग्रान्निदानाद् मुनीशात (तमोऽन्तात्)॥
पुर्यां तत्राखिलायां प्रव्रजनकृतयेऽदापयद् घोपणां सः,
यः कश्चिद्दीक्षितः स्यात्तनुजमुखजनं निर्वहिष्यामि तस्य ॥५॥

परःसहस्रान् जिनराजपार्श्वे, राज्यादिलोकान् समदीक्षयत् सः ।
विष्णुस्तथाकारणतो न्यबद्ध ( भान्त्सीत् ) श्रीजिननामाऽचलितस्व-
भावम् ॥६॥

शिष्यापणान्मुनिपतिभ्य उपार्जित प्राग्,
यत्तीर्थनाम जिनपते' परिवन्दनाया ।
तद्धारित फलभर सुनिकाचनेन,
सेनापराभवभनोद्दलनाय दीक्षा ॥७॥

मगधदेशविभुर्नृपनायको, विविधकूटभरेण समजयन् ।
बहुतमा ललना जिनवीरत श्रमणमागमय समतारयत् ॥८॥

विविधशास्त्रसुधारससेकत, (फल) श्रमणवृत्तिरुदग्रफलानता ।
स्वयमशक्तित उग्रप्रसक्तितो, भवरतोऽपि परान् कुरुते मुनीन् ॥९॥

नरा यथा मोक्षविमार्गणोद्यता–स्तथैव नार्यो भवभावभेदिका ।
दुर्गं सुदुर्गं व्यतिपृत्य मोह–मनन्तनन्धान् प्रविनाशयन्ति ॥१०॥

सम्यक्त्वलाभात् प्रथम सुदीर्घा, क्षेया स्थितिर्मोहनृपस्य तीव्रा ।
अतीत्य वा चेल्ललना समीयु प्रयान्ति कैवल्यमिमा ( ममू )
न चित्रम् ॥११॥

स्त्रीत्वस्य हेतुर्यदभूदमु सा–ऽनन्तानुबन्ध क्षयितु समर्था ।
सा किं न शेषा प्रकृती क्षिपेत, भागे ह्यनन्ते बलमेव वासाम् ॥१२॥

दर्शने विनन्धक च कम• ग्रत्, प्रगीयते,
क्षेपकोऽस्य साधुतोऽपि निजरेदसङ्ख्यकम् ।
अस्ति चेत् समर्थताऽङ्गनाजने तदाश्रिता,
तदा सदा म किं भवन्न साधुतापदान्वित ॥१३॥

न चाम्बर विरोधभाक् चरित्रसम्पदा मत,
यवस्तुनोर्न किञ्चिदन्यदाश्रित ममत्वकृत् ।

न धर्महेतुतो मता तनुर्ममत्वसाधनं,
तदाऽम्बराणि किं ततस्तथाभूतानि सन्ति न? ॥१४॥

पत्यौ मृते तदनुकश्चिदिहाङ्गनाजनः,
स्नेहाद्विशेद्यदि चितां जनतासमक्षम्।
तस्यास्ति दुस्त्यजमिदं किमु चीवरं यद्,
नग्ना न सन्ति बहुशः किमु योगिकान्ताः? ॥१५॥

स्थानानि सन्ति ललनाङ्गगतानि जीव-
संसक्तिमन्ति यदि नैव ततश्चरित्रम्।
तासां तदा पुरुषकायगतानि किं नो,
चिह्ने गुदे जठरभाग उदीक्ष्यतेऽङ्गी? ॥१६॥

षट्कायजीवयतनाप्रयतस्य न स्यात्,
पापस्य लेश इति वारिधरेषु सिद्धाः।
न ह्यङ्गनासु यतना नहि, जीवबोधात्,
तत्केवलं चरणयुक्तममूषु (न स्यात्) कि न? ॥१७॥

अध्येतुमर्हा नहि दृष्टिवादं, स्त्रियस्तदाऽऽसां किमु केवलं स्यात्।
न जातिहीनाय चरित्रदानं, ततो न किं सोऽव्ययमाप्नुयान्नो? ॥१८॥

जिनादिकल्पा न भवेयुरष्टा–व्यानो(उ)नवर्षा विधिशास्त्रवाक्यात्।
एकोनत्रिंशच्छरदामधस्ता–च्छामण्यभावोऽपि न केवलं किम्? ॥१९॥

भवेन् मनः पर्ययवेदनं न हि, त्यक्तो न यावद्गृहकार्यभारः।
ततो न कि स्यात्स्वकलिङ्गशून्ये, सार्वज्ञ्यमुक्ता कथमत्र भक्तिः ॥२०॥

नाथ प्रकृष्ट ललना प्रयान्ति, स्थान तत किं परमैयरुन्ना ।
पापोपचिता नहि सा स्वतन्त्रा, धर्मं तु कस्ता परतन्त्रयेन्तु ॥२१॥

न चास्ति साम्य त्वध उर्ध्वगत्यो , स्पष्टो विरोधो जिनराड्निचारे
( अ जिनेन्द्रमुग्ये ) ।
समस्तसौख्याधिमियर्ति साऽन्य, स्थान युत केवलशाश्वतश्रिया ॥२२॥

तप प्रभावोऽसम आर्हताना, नगाघरोघेऽथ पुराण (रोऽघ) नाशे ।
प्रत्यक्षमासा प्रनलो जगत्या-मसौ तत किं न शिन ह्यमूपाम् ? ॥२३॥

निकल्पभेदान् प्रविन्शयद्भि-र्भाष्ये न्यगादीत्वरलिङ्गभेद ।
भेनो न चोक्तोऽत्र मनोविबोधे, लिङ्गोद्भवोऽस्तु प्रमदासु मोक्ष ॥२४॥

स्त्रियो जगत्या खलु दुष्करक्रिया , प्रेतेऽपि पत्यौ मरणायर्धि या ।
वर्मेन रक्षन्ति सग स्वशील, मृतेपु नारेषु नरास्तथा नहि ॥२५॥

रक्षार्थे स्वकशीलरत्नसुनिधे कोटिं व्यथाना परा,
या सत्यो जगतीह सुन्दरतरोद्भावा न किं सेहिरे ? ।
तासा शेपितपापिका गुणधरीमाप्या दशा को नर ,
श्रद्धयाद्गतश्रुतिसयमद्रो नैनागमैर्घेरिताम् ॥२६॥

श्रद्धा हि धमस्य पवित्रताभृ-न्मूल सदा जीवगन सुगार्यम् ।
तत्रोपयेद्वशगत सुरामा - स्ता सुगुमार्गा श्रमणीसुसद्मात् ॥२७॥

यद्येतु रे चापि भवेत्प्रभुय, आज्ञा स्वकीयामनघा निवाद्रुम् ।
निवेद्य तस्मिन्श्रमणीसमूहो - ह्यह गणीश श्रमणीवरेयु ॥२८॥

निवेश्य ताः साधव उग्रसत्त्वा, ग्रामान्तरे वासमुपश्रयेयुः ।
वासो हि मासद्वयमेव धाम्नि, गणोद्धुरैस्ता अपरं तु नेयाः ॥२९॥

प्राक् प्रत्युपेक्ष्यापरधाम वृद्धा, योग्यं मुनीशाय निवेदयन्ति ।
मत्वा निराबाधमुदारभावं नेतुं परं धाम नयेयुरार्याः ॥३०॥

यथाऽवरोधस्य नृपा गताघं, कुर्वन्ति देशान्तरगन्तुकामाः ।
रक्षापुरोगं नयनं तथाऽऽर्यै-स्तीर्यन्त आर्याः शुभसत्त्वरक्ष्याः ॥३१॥

गणोद्वहा नैव समे मुनीशा, आर्यागणं वर्त्तयितुं समर्थाः ।
आर्यागणं वर्तयितुं क्षमो यो, भवे तृतीये शिवगो ध्रुवं सः ॥३२॥

सूत्रे हि पर्योषणकल्पनाम्नि, द्वितीयभागे प्रथमाङ्गसंस्थे ।
गण्यादिपुगात्पृथगुक्त आप्तैः, सार्यासु धत्ते गणधार आज्ञाम् ॥३३॥

यथा पदानि प्रथितानि गच्छे, सूरीश्वरादीनि सुसाधुमान्ये ।
तथाऽत्र पञ्चापि महत्तरीमुखा-न्यर्च्याणि साध्वीगणपालकानि ॥३४॥

आर्याऽपलापे त्रय एव भेदाः, सङ्घस्य वा पञ्च न चेदमार्यम् ।
तत्सूत्रभेदे प्रवणो हि मन्यात, साध्वीव्युदासं ननु नग्नचारी ॥३५॥

कस्या अपि स्पर्श उदस्यते स्त्रियाः, स यात्वसौ त्याज्य उदारसत्त्वात् ।
स्पर्शः पुरुषस्य तथा द्वयोर्भवे - च्चारित्रसारस्य यथार्थरक्षा ॥३६॥

धामद्वयं तत्पृथगेतयोः स्याद्, गमागमौ नैव न च प्रवेशः ।
यथा तथाऽन्योऽन्यसमागमो न, यथार्थतथ्या जिनशासनाज्ञा ॥३७॥

अतो 'न्यथेवि श्रुतमार्गरे श्रुते, वर्षादिहेतोरपि धाममध्ये ।
ऊर्ध्वस्थिति शीलसुसाधनायै, न पञ्चम स्याद्वहिणा न चेक्षणम् ॥३८॥

रक्ष्या श्रमण्य सकलस्वशक्त्या, समस्य सङ्घस्य शिवाध्वसिद्ध्यै ।
अपार्पुरन्या श्रमणीजनस्य,(रक्षा)दुष्टोपसर्गात् सूरिकालकारया ॥३९॥

शशभशकनन्धू धनतू रक्षण प्राग्,
न्शगतहतिशक्तौ आर्यिकाया प्रणामम् ।
रुचिरमुनिनिहीना दुष्टनिष्कीलरुद्धा
सकलनलबलाभिरार्यिका नातुमुक्तौ ॥४०॥

परिपेलनसत्त्ववती श्रमणी, जिनमार्गपरा नितरा विमला,
शिशुनालतपस्वि जराजरिता, किमु रक्ष्यपदानुगता न मता ।
रहिता व्रतधारणया गृहिणो, यदि वामसहा पटयेयुरिह,
व्रतलोपमधिश्रयति प्रवरा, तदुदाहरको नहि सर्वविद ॥४१॥

तत्त्वतोऽसुमान्नहि स्ववेदधारको विभु
यत समस्तवेदनाशसम्भवा समस्तविद् ।
वेपदेहसंश्रितो विकार आत्मनो ननु
न बाध्यते यत सको न मोहजातिसम्भव ॥४२॥

यदि च सद्गमात्रता विराधिकाऽस्मि केवले
सकेवले सतीह कोऽपि चीवरेण वेष्टयेत ।
सता जिनाशि केवल विभूषरीकृत नहि ?,
यदाङ्गनाशुभेन चेतसा तु नश्यति द्रुतम् ॥४३॥

यदि च संहननं नहि योषितां, प्रथममेतदरिष्टमवाससाम् ।
यत इदं नहि जैनमते क्वचि-द्भवति कीकसतो जनकाश्रितात् ॥४४॥

सञ्ज्ञी यो जातिमाप्तो नरभवसहितां स प्रभुः केवलाय,
संहननं यो विभर्ति सकलसुरगतिप्रापणादाद्यभावि ।
विघ्नानां घातिजानां क्षणभरकृतितो नाशमाधातुमर्हं,
मत्वेदं सर्ववेदाः शिवपदमयितुं द्रव्यतोऽर्हाः श्रुते न ॥४५॥

वेदो नपुंसकमपि पुरदाहतुल्य-श्चेद् द्रव्यतो न विदधाति विवाधमाल्याः ।
भावात्तु ते प्रवरमाप्य वल त्रयोऽपि, श्रेणेः क्षयं ननु व्रजन्ति न
कापि शङ्का ॥४६॥

प्रवरवरशासनं जगति जिनशासितं, द्रव्यमेकान्तिकं न ह्युवाच,
प्रवलतरमोहतः परवशितचेतनो द्रव्यमेकान्तिकं प्राह मूढः ।
सिचयचयवाधनं द्रविणललनाश्रितं वेदमाहानुयुक्तोऽधर्मोक्तिः,
शृणुत सुजना जनि वरसुफलसाधनीं वाचमाधत्त चित्ते स्वकीये
( ऽर्हदुक्तां ) ॥४७॥

वासोऽन्वितात् सितपटाद्धरिद-म्वराणां, जातः प्रभव इत्यभवत्तदङ्काः ।
प्रश्ने कृते जनतयाऽम्बरसत्त्वजाते, दिक् चैव मेऽम्बरमिति प्रतीता
तदाख्या ॥४८॥

प्राक् पार्श्वनाथजिनपस्य बभूव सङ्घः,
साधूद्धुरः कलितसर्वसितादिवर्णम् ।
वस्त्रं दधच्चरमतीर्थगतस्तु शुभ्रं,
ख्यातं ततो जगति शुभ्रपटा इतीमे ॥४९॥

ईर्यादा नहि साधुतामनुसृता निर्रक्षणाणा यतो,
रात्र्यादौ लघुनीतयेऽपि निरयन् कुर्यात्कथ रक्षणम्।
जीवाना करिपादवृद्धि दधत श्वेताम्बरा आयत,
पादोन्माननमस्ति सम्भवपद जीवावन निश्यपि ॥५०॥

सूक्ष्माणा नहि रक्षण भवमृता वस्त्र विना वादिनो,
नत्र स्याद् भ्रमरोपम हि गमन प्रासादिहेतोर्यते।
निष्पात्रस्य कथ ग्रहोज्झिती पर स्याता विनोपक्रिया,
हा! हा! निश्चितनष्टमूलचरणोऽसौ नग्नकायो मुनि ॥५१॥

यथा जिनाना वरतीर्थनाम्नो, भोगे भवेदिन्द्रसुरै कृताया।
सत्प्रातिहार्यौघविराचनाया, अरागभावात्तु न दोपलेश ॥५२॥

तद्वचने तत्प्रतिविम्बराशे र्विचित्ररत्नाभरणैर्युधानाम्।
नो चेन्मौ तर्हि कत्र निचमु—चैत्त्याञ्जलोरीक्रियतेऽर्हदर्चा ॥५३॥

विधेश्चित्राधारा परिणतिमिता विश्वविषये,
यदेक निर्माय प्रदमशुभकम्याऽस्ति न विरति।
स्त्रिया लुप्त्वा शाटीं परिणतिमितोऽसौ जिनपते
र्विलोपायाऽरुणोऽस्तु शतमुरजनिपातो विधिकृत ॥५४॥

दिगम्बरैर्लल्नागणस्तदनुग शोच्य द्वय स्वान्तरे,
सम्यक्त्व कथमाप्यतेऽधिगमिक सूत्र च योग्य कथम्।
चेत् साध्व्या, नहि सा पुन श्रुतमृते साधो प्रसङ्गे तया,
घृत्तिभङ्ग उदीर्यते तत इत चीरेण नाश मतम् ॥५५॥

सङ्ख्यातीताः स्त्रियोऽगुः शिवपदमसमं प्राप्य कैवल्यमग्र्यं,
ग्रैवेये ते हि जग्मुः सचरणभविनो ये नु चैते पुमांसः ।
तत्रेयुर्येऽप्यभव्या न च पुरुषवरा नत्र चैता अनाद्यं,
प्राप्याऽस्थ्नां सञ्चयं स्युस्तदपगत शुभस्यास्ति वाचां प्रसारः ॥५६॥

श्रीआदिनाथेन विधेर्विधात्रा, बोधाय मुक्ते भरतानुजस्य ।
आर्ये, ततश्चाप स बाहुसाधु–र्निर्ग्रन्थयोपे ह्यमितप्रभात्वे ॥५७॥

चलितमपि चरित्रान्नेमिनाथस्य बन्धुं,
व्रतपथदृढतायै योपदेशं ततान ।
स्थिरतरचरणोऽसौ बोधमाप्य प्रजात–
स्तत इति न समोऽयं राजिमत्याः प्रयत्नः ॥५८॥

भूपेषु वर्यो नृप आर्हतः श्री–सुहस्तिपादाम्बुजभृङ्गरूपः ।
श्रीसम्प्रतीति भरतं सशोभं, चकार यश्चैत्यमुखैर्विभूषैः ॥५९॥

सुहस्तिनस्ते भरते त्रिखण्डे, स्वदीक्षितानेकमुनीन्द्रवर्यैः ।
प्रस्तारयामासुरनेकशाखा–प्रशाखयाऽशेषधरां सुसाधून् ॥६०॥

तानाचार्यान् त्रिविधविधिना पालयन्ती जिनानां,
धर्मस्योग्रां सकलसुकृतिनां भाविमोक्षप्रधानाम् ।
ख्यातिं चक्रे प्रवचनयशसे सोदरेणाप्तसज्ज्ञान्,
नाम्ना यक्षा प्रवरमतिधनाह्यार्यगिर्याख्यधर्त्री ॥६१॥

मात्रा गुरुभ्योऽर्पित आर्यवज्रः, षण्मासमात्रामवयस्कबालः ।
स्वोपाश्रये तं धृतवत्य आर्याः, कथं न सङ्घस्तदुपक्रियां स्मरेत् ॥६२॥

जैनोऽस्मो निविनद्धाति हृदये स्नेपा जनाना मर्ति,
जैनेन्द्रे वरधमकमणि परा कर्तुं सुधासोन्राम् ।
चिन्ता तत्र विशेपतो निजकुले मात्राद्रिके स्त्रीगणे,
ता सफलीकुरुते श्रमेण सुधूपार्यासङ्गगो बुद्धिमान् ॥६३॥

आर्याणा महिमाऽयमात्मयशसा यशस्य ग्रन्थिश्चल,
शील मेरुमम विभर्ति ललनालोक समस्तोऽमलम् ।
तत्रैपोऽत्र भवेद्यदीतरकुले जात नर न स्पृशेत,
शीलेनात्मयशा भवेच्छ्रमयुपा ससगरक्तो भवेत् ॥६४॥

येपामार्याकुल नो सुकृतकृतिनिधौ शुद्धमार्गप्रतेष्टु,
धर्माचारे प्रवीणा सुकृतवररतिर्नि देप्टुमर्हाऽनलानाम् ।
शुद्वा धमस्य चेष्टामपरपुम्पत स्याच्च धमप्रवृत्ति ,
स्त्रीणा नो तत्र शील भवति ऋजुशीला धमनाम्नाऽधमग्ना ॥६५॥

आर्याकुलेनापि तथात्र काय, श्राद्धयो यता स्यु सुकृतोद्यता दृढम् ।
यगा महान् यत पुरुपादथाऽऽसा, कुल च धर्मप्रवीण व्यधास्यत् ॥६६॥

यथा च मोह न व्रजेयुरन्य–कुलोत्थिते पुंसि पराश्च धर्मे ।
भवेयुरेता व्रतधारिवृत्ते , सस्कारमाप्या श्रमणीजनेन ॥६७॥

निसर्गसम्यक्त्वमुदीरित श्रुते, श्राद्धाश्रकाणा प्रवर तदेतद् ।
आर्याजनाद्धमपरायणत्व, जात समारयात्यवलाननस्य ॥६८॥

शोभनस्य कुलधर्मसद्विधे–र्या पुन फलपरम्पराऽनघा ।
भाविनी भव इहापि ता पुन–र्नयेयुरार्यिका न चापर ॥६९॥

श्रमण्याः सत्कारं विपुलविधिना श्रावकजनो,
विदध्यान्नित्यं चेत् कुलमपि सकलं तत्कृतिपरम् ।
भवेदेवं धर्मोद्यमपरहृदः सर्व उदिता-
जिनेन्द्रैः सद्धर्माच्चलयितुमलं नाऽमरगणः ॥७०॥

जैनोऽसौ धर्ममूलं विनयमधिगतो धर्मकार्योद्यतेषु,
साध्वीवर्गेषु यस्माज्जिनगणयतिनां या गुणानां प्रसक्तिः ।
तां सर्वां मूलरूपां विशदतमगुणामेष वर्गो दधाति,
मानं धत्ते गुणानां च इह नरगणो धन्य एषैव जैनः ॥७१॥

इति अष्टाविंशोऽध्यायः ।

---

। एकोनत्रिंशोऽध्यायः । ( श्रावकाधिकारः )

जैनो यो मनुते भवाब्धिमटतां सूक्ष्मान्निगोदाद्बहि-
र्निस्सरणं नहि दुष्करं परकृतं लोकानुभावो यतः ।
सम्मील्याश्रितभव्ययाऽघनिचिति दुःखित्वभावे धरन्,
निर्मायाऽल्पमसुश्रितं नयति तन्नेदं फलं स्वोद्यमात् ॥१॥

एवं क्रमेण समिलायुगयुक्तिवत्स,
मोक्षस्य भूमिमनघां नरतां च तत्र ।
देशं कुलं प्रवरजातियुतं लभेत,
सुश्राद्धमेकमलमश्नुत आत्मयन्नात् ॥२॥

मोहस्य संस्थितिमयं क्षिणुतेऽप्यबोधा-
देकोनसप्ततिमितामधिकां च किञ्चित् ।

धाराधरेषु नितरां श्रितकोटिकोटिं,
नेत्र तथापि लभते श्रमणोपसेवाम् ॥३॥

भव्यत्वभावे परिपच्यमाने, भवेद्विनाशस्तदुपग्रस्थिते ।
स्थितिर्भवेदात्मन ईदृशी या, भेदस्तु भावी कुलिशाभपापे ॥४॥

न तादृशीयन्तमटाट्यतो भव, प्रस्फोरयामास कृतिं कदापि ।
गीतं ह्यपूर्वं तत एव विज्ञै-रप्राप्तपूर्वं करणं कृतिं ताम् ॥५॥

नैतत्कस्यापि पूर्वं जगदनुभवतो वर्जयित्वाऽऽत्मयत्नं,
जातं कस्यापि जन्तोर्न भवति भविनो भाविनीद्धेऽपि काले ।
तद्दृध्य स्वात्मयत्ने प्रचुरतरबले स्फोरिते भव्यभावाद्,
जातं श्राद्धत्वमस्मात् परममधिगतौ शुद्धसम्यक्त्वलब्धे ॥६॥

एतच्चित्ते निधायेतरजनहृद्ये तत्त्वनिष्ठा प्रमाय,
शुश्रूषा धर्मरागो जिनगुरुविषयेऽभिग्रहो व्यापृतौ चेत् ।
सत्या ज्ञेया हि तस्मिन् परिणतिरमला शास्त्रगाम्याश्रयेण,
स्वस्मिन् ज्ञाने यद्ध न च परवशिनो नैतदपराङ्गताभाक् ॥७॥

सत्त्वेऽस्य स्वात्मनोऽपि प्रभवति रुचिरा निश्चलाग्रह्विते(ऽ)स्थ,
जीवादौ स्यात्परोक्षा रुचिरमरजराऽकम्पनीया सुयोधान् ।
द्वेधाऽस्या दुरग्राम्नि फलमनुघृणयोद्विग्नता जन्मगार्द्ध-
मोक्षे लीनं मनश्च न भवति वणशस्तत्त्वभूते (सार्थे) दुरात्मा ॥८॥

सम्यक्त्वे शुद्ध (भाव) रत्ने वृजिनचयहते प्रापिते तीव्रभावाद्,
यत्नेनात्मागत्स्वकरणरतिभरे स्यात प्रवृत्ति श्रुतेन ।

अन्धोऽरण्यं प्रयातो यदि शुभसुकृतो देशकादध्वयायी,
चेदेषोऽशुभ्रभावी दुरितचयधरो याति मार्गं श्रमाढ्यम् ॥९॥

यथा न भाविभाग्यवान् वृथोपदेशदायकान्,
शरणमेति भाविसौख्यसम्पदा समन्वयात् ।
तथा कुतीर्थ्यतन्मतानि मन्यते न दर्शनी,
मतं ततो हि दर्शने सति श्रुतं शुभं ननु ॥१०॥

एवं प्राप्तः स्वयं स्याच्छुचितरमननं स्युः परेऽपीदृशाश्चेत,
संयोगः श्राद्धवर्यैर्भवति नियमतो धर्मकल्पद्रुमाम्बु ।
संयोगाः सर्वरूपा निखिलजनचयैर्लब्धपूर्वा ह्यनन्ताः,
संयोगः श्राद्धलोके भवति तु कतिचिज्जन्मभावान्न भूरीन् ॥११॥

सम्यक्त्वाराधनं यद्भवति भवभृतो वर्जयित्वा विराद्धिं,
सप्ताष्टौ जन्मभावान्न परत उदयो यत्ततो मोक्षधाम्नः ।
एवं श्राद्धैरपि स्याज्जिनमतरसिकैस्तद्वतः स्वस्य योगो,
ज्ञात्वैतद्दुर्लभत्वं शुचितरमनसा सादरः श्राद्धलोके ॥१२॥

कुलं सच्छ्राद्धानां सदृशमनघं देवमणिसि-
र्यथा तान् भाग्याढ्यो भवति नर आराधनपरः ।
तथाभव्यत्वं स्याद्यदि च परिपाकगतिमत्,
सुसम्प्राप्तं श्रेयान् भवति जिनमार्गमतिमान् ॥१३॥

यथाऽभव्यानां स्याज्जिनपगदितश्रौतपठनं,
घने मोहे क्षीणे पुनरपि च तस्मात् क्षपयति ।
ककारादेः पाठे सुगतिगमनं धर्मकरणात्,

तत्र स्याच्छ्राद्धाना प्रवरतरनंशजनुषा ।
कश्च मोहो जातोऽपजल्पिरभा न स्थितिमित ॥१४॥

यथा धान्या युप्तान्यवनितलमाप्यश्चिर,
भवन्तीष्टोत्पत्तौ कृषिकृतिगणैकार्थितमतौ ।
समर्थान्यप्येषा पचनविधिसिद्धिस्तु करणा,
तदाऽज्ञानेनाप्तात् प्रथमकरणान्मत इह ॥१५॥

जीवेनाधिगत निसर्गजनित सम्यक्त्वमाप्नो न चेत्,
तज्जायेत सुधीरनिर्मलमते सयोगसद्भाग्यत ।
श्राद्धाना वरयोगतोऽधिगमज प्राप्ति सुरेनास्य च,
सयोगैकधन न कायमुन्येत् क्वापीष्टसिद्धिप्रन्म ॥१६॥

चैत्येभ्योऽपि च जायते जनिभृता सम्यक्त्वमेतत्पर,
चैत्यानि प्रतिबिम्बसन्ततियुता येनाश्चिन श्रावकात ।
स्युर्नन न च तानि सन्ततमिहार्चाया पद जायते,
चैत्याना जिनबिम्बराजिसजुषा योग समूहोत्थित ॥१७॥

जिनवरागमपारदृशो मुने', शुचितरागमवस्तुकथोदिते ।
भवति सद्दृगनुत्तरताश्रितो, मुनिवरागमन समवायत ॥१८॥

समस्ता क्रिया धर्ममय्यो जनाना, स्यु साहचर्यात समूहे भवेत्तत् ।
कुमार्गवास दधता लघु स्यात्, धर्मोद्यतानामपि धर्मनाश ॥१९॥

धर्मो द्विधाऽऽद्य सहकारसाध्यो विचारसाध्यश्च भवेद् द्वितीय ।
सामर्थ्यसाध्ये द्वितीयेऽपि तस्मिन्, नोपत्तिरक्षापरिवर्धनानि ॥२०॥

शक्तेः समुत्पत्तिरथ प्रयत्नात, स्थितिश्च वृद्धिश्च ततः प्रसूते।
समग्रमेतत्समुदायसाध्यं, मत्वेति कुर्यान् सततं सुसङ्गम् ॥२१॥

प्रबलवरपुण्यतः कल्पनातिगसुखं, साधनैः सह नरं शुद्धमेति,
प्रचुरतरमोहजः संश्रितो नहि भवेत्, प्राणिनं वृषधरं कृष्णलेश्यः
(तीर्थ्यमोहः)
सुगुरुचरणाश्रितः शास्त्रशासनयुतः प्राप्नुते जिनमतं स्वल्पयत्नात्,
अपगतकुकर्मकः सिद्धजिनधर्मको मन्यते सुखकरं श्राद्धवर्यम् ॥२२॥

आत्माऽनादित आहितो घनमले मिथ्यात्वपङ्कोद्धुरे,
नैव ज्ञातमनेन सुन्दरतरं नित्यस्वरूपं निजम्।
तत्सर्वं जिनराज एव विमलज्योतिर्भरेणेहितं,
भव्येभ्य उदयाय तन्निगदितं मत्वा जिनं मानयेत् ॥२३॥

रागद्वेषमुखारिवर्गविलयाज् ज्ञात्वा समग्रं जगत्,
स्याद्वादाङ्कितसर्ववस्तुनिकरं भव्याय मोक्षाप्तये।
योऽदिक्षद् विनयेषिणे मननभूरूपं स्वरूपं परं,
जीवाद्यर्थचयस्य तच्छुचिमनाः श्रद्धापथं नामयेत् ॥२४॥

भावा भविष्यन्त उदाररूपा–स्तदा यदा शस्तमना इदानीम्।
जीवस्तथाऽसौ शुभशास्त्रसक्ते–स्ततो यतिभ्यः श्रवणं क्रियेत ॥२५॥

ससङ्गश्चेदन्यो रुचिततरवस्तुविषयं,
स संतोष्यो दत्त्वा दलितविषयादिवस्तुमननः।
स सेव्यः स्याद्भव्यैर्निरुपमविधेः सेवनगतात्, ॥२६॥

दुष्प्रापा जगतीह जैनमतिनी श्रद्धा समस्ताङ्गिभि-
लब्ध्या दुष्करमेव सौम्यमनसा मुक्त्यै समाराधनम्।
प्राप्तो विनकराणि कर्मदलिकान्युद्वेष्टयेद्धन्यता-
ऽऽरम्भार्थाल्पिमोहरक्तमनस स्याद्दुष्कर पालनम् ॥२७॥

येषाश्रित् फलभाजनान्तसुभगा श्रद्धा नराणा यत,
ससार भ्रमता भवाश्रितिमता विनोत्करोद्भूतय।
स्वल्पान्येव हि साधनानि मतिमत्ससगसारोद्धरा-
ण्येतान्यात्मबलातिरिक्तसहितान्यथप्रदानीह नो ॥२८॥

लभ्येव भवभानतानवनता ता नेतरेऽर्हो श्रुतौ,
चिन्तामण्यमरद्रुमाहतिपरा नेच्छान्तरा सत्कृतिम्।
लब्धेष्वेपु भवेन्न चेन्मुधिकया तेपामनाराधना,
तत्साध्य फलमश्नुतेऽत्र तदिवाहच्छासने सद्रुचि ॥२९॥

प्राप्या श्रद्धा गुरा स्यान्निजपरिजनग स्याद्गुणाना समूहो,
मार्गानुश्रायवर्ती मुनिपतिरथिता पञ्चयुक्ता च त्रिंशत्।
उप्त धान्य प्रभूत भवति यदि भुवि शर्कराद्य न भूरि,
श्राद्धाना भाग्यमेतत् प्रचुरतगुणैर्गोसिव यत्सुदुग्धम् ॥३०॥

एषा गुणाना सुलभा स्वसत्ता, स्वजन्मन प्राङ्मुनिशस्तरूपा।
हेतुर्भवेत्तत्र सुभव्यतैव, भाग्योदयोऽप्यहगुणालयेपु ॥३१॥

निग्रहृद् पुनरातसुसंस्कृति, यदि भवेत् सुदृत्तापनत्रघने।
इतरथा तृणपुञ्जसमुद्गम-सदृशमेव न रक्षणतधने ॥३२॥

निजगृहे तु गुणाः स्वजनैः पुरा, यदि भवेयुरुपैति सुरम्यताम्।
निजकृतेर्यदि सम्भव उद्भरो, वरतरं त्रिकसप्तमिता गुणाः ॥३३॥

अवाम्यकुम्भः शुभवासवासितः, प्रशस्यते प्राज्ञवरैः प्रकामम्।
तथैव यः स्याज्जिनधर्मवासितो-ऽवाम्यः कुतीर्थ्यैः स वरोऽस्ति जैनः ॥३४॥

हृदब्जभागे शुचिसौम्यरम्ये, कुवासनालेशविमुक्तिशुद्धे।
लोकोत्तमानां शरणे प्रभूणां, ध्यानं सदा मङ्गलकारकाणाम् ॥३५॥

एतादृशो गुणवतो जिनसिद्धसाधून्,
धर्मं च यो धरति नित्यमरागरोषः।
सयः स एष परधर्मगतात् समूहा-
च्छ्रेष्ठो यथा मणिगणोऽमलकाचजातेः ॥३६॥

विनयवान् श्रुतसारविबोधनः, कृतपरम्परधर्मविरोचनः।
शिवपदं प्रति यत्नवतां समा रुचिरतो भवतीह सुनोदनः ॥३७॥

परमतानि कृतेषु गुणान् बहून्, जगति सर्वजनान्निगदन्ति तु।
जिनमतं निजरूपमुपानय-न्नकृत आह दुरात्मन आश्रवान् ॥३८॥

यतो व्रतानां निजरूपता तत-श्चारित्रमोहोऽसुमतां विबन्धकः।
उक्तानि नान्येन दुरात्मकान्य-व्रतानि मुक्त्वा जिनराजमेकम् ॥३९॥

चारित्रमोहस्य विबन्धकत्वं, पापान्निवृत्तेर्नहि तत्प्रतीतेः।
तत्त्वाश्रितायाः प्रतिबन्धकत्वं, रुचेरनन्ताश्रितमित्यनन्ताः ॥४०॥

पापप्रहाणस्य समस्तधर्मे, सुत्यापरस्तात् सुरभावसाम्यम् ।
गुणे चतुर्थेऽच्युतसीम्नि तद्वद्-देशाद्विरक्तिं श्रितवत्यपीह ॥४१॥

भव्यत्वपाकेन यथैव भव्या, क्रमेण सम्यक्त्वमुखान्यवापु ।
स्थानानि तद्वद्भवितव्यतागुणा-न्मुक्तिभविन्री लघुदीर्घकालात् ॥४२॥

ततो न दीर्घेऽमरजीविते वा, लघुन्यपीष्टस्य विलम्बचिन्ता ।
श्राद्धा द्विधाणुव्रतसहिता वा ऽन्यथा न तत्राऽस्ति भिदा सुरत्वे ॥४३॥

सम्यक्त्वसत्त्वे यदणुव्रतानि, योग्यत्वभाञ्जि परथा न चैव ।
गीतार्थनागैस्तु यदुक्तमेतत्, त्रसेतराणां मननाद्धि योग्यम् ॥४४॥

गुणक्रमो य प्रतिपादितोऽस्मिंस्, स प्राग्गुणाना स्थिरतादिसिद्ध्यै ।
न चाप्रिमाणां भवितव्ययोगा-दुपागताना विनिषेधनाय ॥४५॥

नित्यं सम्यक्त्वशून्या अपि जिनवचनात्मोघत साधवः स्यु-
र्ग्रैवेये देवभाव परिणतिशुचयोऽनन्तसङ्ख्या प्रयान्ति ।
सम्यक्त्वावाप्तिहेतुयत उमितरा ख्यायते जीवरक्षा,
तस्मात्स्थैर्याय सोक्तिर्न तु गुणहृतये तत्त्वविद्‌वेद्यमेतत् ॥४६॥

असयत संयतता वदन् यो, मतोऽस्ति पापश्रमणीयमध्ये ।
शून्यं स साधुव्यवहारवृत्त्या, तथोदिति संयमिवन्दनाय ॥४७॥

सम्यक्त्वचिह्नानि शमादिकानि, निजात्मनि ज्ञातुमिमानि मतानि ।
परात्मनि ज्ञातुमिदं तु धर्म-रागाङ्कितानि प्रथितानि शास्त्रे ॥४८॥

एवं च तत्त्वात्परधर्मवानपि, स्वाचारमाश्रित्य जिनेन्द्रधर्मा ।
साधर्मिकः स मत्या प्रबुध्य-माने न मिथ्यात्वकणोऽपि भावी ॥४९॥

तथैव योऽभव्यतया जिनेन्द्रधर्माम्बुदे मुद्गशिलासमानः ।
तथापि शुद्धं मुनिचर्यया मुनिं, वदेन्न तत्राऽस्ति कणोऽघघाप्तेः ॥५०॥

श्राद्धस्य चर्या जिनपस्यह्याज्ञा, धार्या सदा मस्तकमञ्जरीव ।
जहात्यपथ्यं सुमती रुजातुरो, यथा तथा दर्शनिनो विमिश्रान् ॥५१॥

सम्यक्त्वचर्या जिनपूजनाद्याः, करोति संसारसमुद्रसेतुम् ।
स्थिरा मतिः प्रत्यहमादृताभिः, क्रियाभिरस्मात् प्रतिघस्रमुद्धुरः ॥५२॥

आवश्यकपट्के मुनिभावसिद्ध्यै, शिक्षाव्रतानीष्टदिने विधेयात ।
दानं सुपात्रे मलमुक्तशीलं, चित्रं तपो भावममोघमेयात् ॥५३॥ युग्मम्

स्वाध्यायलीनो व्रतभावरूप-प्रमुख्यदर्शिश्रुतरत्नराशेः ।
सर्वास्ववस्थासु निधानभूतं स्मरेत् सदा पञ्चनमस्कृतिं च ॥५४॥

श्राद्धत्वशोभावहने प्रवीणः, परोपकारोऽस्ति ततोऽत्र यत्नः ।
यथात्मनो जीवितमेव कान्तं, तथा समेषामिति तत्प्रदेयात् ॥५५॥

त एव धुर्याः सुजनेषु ये स्यु-र्गुणान्वितान्निःस्पृहमर्चयन्ति ।
तदाऽमितान् प्राप्य गुणान् शिवाध्वो-द्देशास्तदर्हा न हि किं
जिनेशाः ॥५६॥

गुणानाधायान्तः सुजनसमुदायो गुणिजनान्,
गुणाप्त्युद्देशाच्चेद्व्रजति नितरां वै समुचितः ।
ततोऽर्हन्तोऽर्च्याः स्युर्जिनपतिगुणानां स्तवनतः, ॥५७॥

देवो धर्मो जीवमुख्यार्थसत्त्वं, जीवे न स्यान्नैव स्वज्ञानगम्यम् ।
अज्ञातेऽस्मिन् साधनं तत्फलं च, नैव स्यात्तत्सूरिरर्च्यो बुधानाम् ॥५८॥

धर्मादिकार्ये सुसहायनिष्ठ, सहायका धर्मपरा सन्तु ।
अनेकभेदा विदधीत भक्तिं, कुटुम्बिलोकाभ्यधिकार्थकारिणाम् ॥५९॥

मनोऽनुसृत्याऽध्यवसायभावो–ऽन्येषां मनोवर्जितजातिकानाम् ।
तदन्यथात्वेऽपि ससाधने नरे, भवेत्प्रवृत्ति सकला ममाघना ॥६०॥

मनश्च कायेन तदीयवर्गो–नादाय निष्पाद्यत आत्मरूपम् ।
कायश्च जीवस्य गृहीतमन्धो–ऽनुसृत्य तद्रूपभवो यत म ॥६१॥

सुसाधुरत्न नयहीनराद्ध–मशुद्धमत्त्वा स सुमोष गेहम् ।
धान्ते गृहेश सममार्पिपत्त–दन्ने प्रजल्पे किमु नीतिहीने ॥६२॥

चैत्यारम्भ प्रवरतरफल श्राद्धवशस्य प्राय,
सम्राड्न्य भवति च धनव नीत्यनीत्यो प्रकारात् ।
तत्राऽऽरम्भे द्रविणमाय यस्य तत्तस्य देय,
सद्व्यस्यामेऽणुकनकविषये चान्यमेतस्य सोऽर्थे ॥६३॥

गृहस्थधर्म प्रवर हि दान, न्यायागत तत्प्रथम निरीक्ष्यम् ।
श्रद्धाक्रमाद्या सुफलादा स्यु द्रव्येण शुद्ध यदि मानसार्यम् ॥६४॥

भावो हि दाने फलदानस्य , पर न सोऽन्यायपथान्तराणाम ।
समस्तमेतन्मनसा विचिन्त्य, कुर्यात्सौ सद्व्यवहारशुद्धिम् ॥६५॥

न हिंसया न च धूर्तमाख्यान्न चौर्ययोगान्न च वञ्चनेन ।
यद् द्रव्यमात्त न वलोकमात्त्या–रम्भक्रमो यत्र न लङ्घित
स्यात् ॥६६॥

लोके श्लाघा शासनस्योत्तमा स्याद्-यद्वच्छुद्धया नो तथाऽन्यैः
सुकार्यैः।
तिर्यग्देवास्तीर्थकृद्दानहेतो-श्छिन्नोद्देशादानयन्तीह हेम ॥६७॥

पत्तने पट्टनरो धर्ममहिमाऽसमोऽशेषजैनेन सत्वरमुपेयः,
धर्मगात् पट्टतरात् मानमहिमाद्दतात् शेषकार्येण नो सुघटतेजाः।
भावनां पट्टतरीं लोकसमुदायजन्यां कर्तुमर्हेण जैनमतजातां,
स्यन्दनो वरतरो देवतरुसन्निभो भ्राम्यते दानकीर्तिपरगानः ॥६८॥

श्रीशत्रुञ्जयरैवताचलगिरिप्रोद्यत्प्रभावार्बुद-
जीरापल्लिसुवर्णसानुसहितः सम्मेतशैलोऽञ्जनः।
यात्रैषां करणीयतापदमितः स्याद् दर्शनं यद् दृढं,
तीर्थेशादिविहारनिर्वृतिमुखोदन्तावलेः संस्मृतेः ॥६९॥

श्राद्धः सर्वजिनेशशासनरतः सूत्रोक्तमेकं पदं,
संसाराम्बुधितारणेऽसमफलं द्वारं नरामर्त्यशम्।
एकं शाश्वतसिद्धिधामगमने सामायिकं प्रत्यलं,
मत्वेत्यात्मनि शान्तिमुद्धरति संवारप्रवेकोन्मुखाम् ॥७०॥

दोषा ये क्रियया भवन्ति भविनां कष्टप्रचायोन्मुखा-
स्ते सर्वे सुनया विरुद्धकृतितस्तस्याः पदोन्मार्जनात्।
दुर्वाक्याज्जिनरागगीतपदतोऽर्थानां प्रलापोत्थितात्,
संसारे भ्रमणं गतान्तमिति वाक्चेष्टां श्रुतोक्तां सरेत् ॥७१॥

राजा रक्षति रक्षणीयपदगां स्वीयां प्रजामादरात्,
तत्साधनमिदमित्यवेत्य जनता तां गोधनेनाञ्चिताम्।

जीवस्यास्ति विकम्पन पर इति ग्रासोद्यताम्नायते,
पट्काया परिरक्षणीयपदगा जन परो मन्यते ॥७०॥

शास्त्राणा विधिरान्यराशिरधुनत्पापप्रतानोदय,
यत्सङ्ख्यागतमानमेय इह तद्राम्य सद्गुक्तियुक् ।
ताभ्या यन्न निवारित पदमधो वाक्यै सहस्रैम्नरद्,
दृष्टान्तप्रतिदर्शनात् क्षणमियात्रानद्भुय सद्गति ॥७३॥

मत्यैव घरधर्ममार्गनिपुण श्राद्ध पर सत्रसेत,
ग्रामे यत्र जिनेन्द्रचैत्यततय स्याच्चागमस्यागिनाम् ।
निष्णा धर्मनिधौ च जैनमतगा क्षेत्रे गतोपद्रवे,
मत्र स्युर्गुणराशय फलधरा सत्स्थानकात्तच्छ्रितात् ॥७४॥

श्राद्धस्य जन्ममरणोज्झितमेव धाम,
प्रार्थ्यं, न तच्च दमनेन विनेन्द्रियाणाम् ।
चारित्रमेव पटु तत्र तदा स्वतन्त्र-
स्तत्कारके सुगहुमानयुतश्च मद्ये ॥७ ॥

गुणाय यत्स्याज्जिनराजमार्गे, पूज्य तदेवेति सुपुस्तकानाम् ।
पूजा यत्न्यन्नहि साधन स्या-त्कलौ गुरूणा गुरुरेष तद्यत ॥७६॥

आराधनेन जिनपादिगणस्य मुक्ति-
राराधन च परिणाममनुप्रधानम् ।
भवेन्क्रम सोऽनुसरन् क्षणालि,
यथाथशक्ति प्रतनु क्षणांस्तत् ॥७७॥

यथार्थं श्राद्धत्वं भवति भविना शास्त्रगदितं,
जिने ज्ञानाद्यर्थास्तत इह विधेया बहुमतिः ।
न विघ्नानां भावो गुरुगुणसपर्यां विदधतो,
महादानं नित्यं भवति गदिता चिह्नततिरियम् ॥७८॥

चर्यामसौ नित्यमुदारबुद्ध्या—ऽहोरात्रिकीं श्राद्धगणोचितां धरेत् ।
न चेत्समेतो मुनिभावमन्त्ये, संलेखनामुत्तरसौख्यदामयेत् ॥७९॥

जैनोऽसौ वरधर्मकर्मकरणेऽनन्योपकारक्षमं,
मत्वा श्राद्धवरं तनोति नियतं तस्य प्रभावप्रथाम् ।
सङ्घस्यापि चतुर्विधस्य नितरामाराधने स प्रभुः,
कर्ता कारयिता प्रशंसनपरस्तुल्यास्त्रयोऽप्यार्हताः ॥८०॥

इति एकोनत्रिंशोऽध्यायः ।

---

। त्रिंशोऽध्यायः । ( श्राविकाधिकारः )

जैनोऽसौ मनुते समस्तजिनपैर्मोक्षं वरेण्यं पदं,
गन्तुं येऽसुभृतोऽर्हतां निजगतां सन्धारयन्तो मताः ।
तेषां यो भणितः सुकर्मकरणो वर्गः शुचिर्योषितां,
तं नित्यं शिवधामसाधनपरं पूजास्पदं भक्तितः ॥१॥

श्रद्धाऽनघा शासनगा सदाऽस्याः, श्राद्धीतिशब्दो न पराप्तसङ्गात् ।
बाला युवत्योहिजराविजीर्णाः, श्राद्धयास्तु वर्गो जिनपैः प्रशस्तः ॥२॥

स्वरणंगर्वेण यथा जनाना, म्लेच्छीकृता कोटचधिका जनानाम् ।
द्विजैस्तथा न्यिसनै स्ववेन्–गर्वेण योषा प्लविता शिवाप्ते ॥३॥

न जैनमार्गे शिवसाधनाया, वणस्य वेदस्य विशेषवार्ता ।
श्रेण्या क्षपण्या क्षपयन्ति वेदा–स्त्रयोऽपि मोहक्षपणे क्रमेण ॥४॥

भावो हि जीवस्य शिवाप्तिमार्गं, स्यात्तुलितो रोद्धुमल, न चान्यत् ।
पञ्चेन्द्रियत्वप्रमुख तु साधन, स्यात्साधको भाव उपारूप ॥५॥

यथा मुनीना प्रवह शिवाय, प्रवर्त्तमानो गृहिवर्गयुक्त ।
तथा श्रमण्योऽपि शिवाप्तिहेतो–र्विचरन्त युक्ता स्वकसेविकाभि ॥६॥

श्राद्धयो गृहिण्य सकल तु कार्यं, गृहाश्रित नित्यमुपाचरन्ति ।
जग्धौ च पाने च गृहाश्रिताना, जीवावनास्कर्तुममूयदीशा ॥७॥

स्त्रीपरारोहहनेन पत्यु–र्मदन चानङ्गमाश्रयेद्गहम् ।
शय्या न पत्युर्यदि नैव लङ्घयेन्, पर सहसा शरणो दिवि स्यात् ॥८॥

विना तात बाल भवति वनिता पालितु (रक्षितु) मल,
विधायाप्येषा तु प्रवरधनिना कण्डनमुखान् ।
विना योषा बाल भवति न हि रक्षणविधौ,
कियत्काल जीवेदपरवनितारक्षितभव ॥९॥

अत स्त्रीणा प्रोक्त व्रतमतुलित स्वेतरनरे,
सदा धाय मह्याऽपरपुरुषमीक्षेत न दृगा ।

स्त्रिया भूषा शीलं कुलमपकलङ्कं च भवति,
सुशीला यत्रैतास्तत उदितशीला: स्त्रियः उमाः ॥१०॥

यदा शुद्धं शीलं भवति वनिता पत्युरुदितं,
प्रतीतेः पात्रं यद् धनकुलसुतादिप्रद इह ।
भवेत स्वामी प्रेते भवति वनिता वंशवह्नी,
ततः पाल्यं शीलं चरितमुदितं प्राक्तनमुखेन ॥११॥

भवाब्धिसन्तारणयानतुल्यं, दानं सुकृत्येषु परं सुकृत्यम् ।
अस्य विधानं महिला विदध्युः कथं न तासां भववार्धिपारः ॥१२॥

मध्याह्नकालः प्रवरो मुनीनां, भिक्षाभ्रमस्यागमसम्मतत्वात् ।
तदा च दानप्रसवो हि धर्मो, भवेद् गृहावृत्तितयाऽङ्गनानाम् ॥१३॥

त्रिसन्ध्यं जिनार्चां विधातुं समर्था, महेला यतः कालसुसाधना सा ।
खरः सन्दधात्यर्धदग्धो निषेध, महेलाऽस्ति योग्या श्रुतोक्त्या न
मिथ्या ॥१४॥

मुक्तेर्निषेधं ललनागणस्य, दिग्वाससश्चक्रुरुदाररूपाम् ।
जिनेन्द्रपूजां न तु मुक्तिसाध्यां, खरस्तु मूलप्रविणाशदक्षः ॥१५॥

प्रभाते शय्यायां पठति परमां पञ्चपदनति,
विमुञ्चन्ती निद्रां यदि च निजकं स्याच्छुचिवपुः ।
स्मरन्ती तां चित्ते यदि च तनुकं स्यान्नहि शुचि,
ततश्चित्ते कुर्यात् कुलममलिनं धर्मपरमम् ॥१६॥

चैत्यं ततो गेहगतं प्रविश्य, नैषेधिकीमुख्यविधिं विधाय ।
कुर्याज्जिनेन्द्रार्चनमात्मलाभ – प्रद्योतनं पुष्पमुख्यैः सुद्रव्यैः ॥१७॥

स्तुतिस्तोत्रे स्तौति प्रसितममलेऽर्हन्तमतितमे,
गुणाना सङ्घाते जनिमुनिशिवाप्त्यान्जिनिते।
गृहस्थानामेषोऽमितगुणरो भावमतिगत
स्तनस्तेनाजस्रं विनयसहिते स्तौति गृहभाग् ॥१८॥

प्रत्याख्याय निजात्मशक्तिनियत प्रातस्त्यमादौ यम,
सङ्घप्राप्तमर्हतो गृहमितो यात्वा विशेत् सा विधे।
कृत्वा चार्चनमर्हता बहुविधै पुष्पादिभिर्भावत,
प्रत्याख्याय च निर्गतो गुरुमुखाच्छास्त्र शृणोतीष्टदम् ॥१९॥

आगत्याऽऽलयमाचरेद्विधिपरो धर्माङ्गनान मुनेः,
यद्वा भोजनधारण वितरतीशे साधवे दातरि।
कुर्यात्पौषधपारणेऽपि यदिद पम्पुन्यते दीपवज्,
जैने शासन एष नो ऋणगतो न्याय कदापीष्यते ॥२०॥

धान्येन्धोऽम्बुविशोधने नित्यगो सर्वत्र रक्षापरो,
कुर्यात्कार्यमपापपापरहित प्रेत्यावतार हृदा।
अग्रे कृत्य सुदृष्यदुष्कृतिफल नो विस्मरेच्चित्तत,
श्राद्धश्चैषा द्वयमाप्नुते सुखकर कीर्ति परत्रामरम् ॥२१॥

तीर्थाना विविधाहदादिमहिमाढ्याना जनु पावनात्,
यात्रा सत्कृतिसयुता भवतरी कार्याऽऽप्य सत्साधनीम्।
सम्पत्ति सहचागतपरजन चास्य सिद्धौ फल,
ज्ञेय, स्पष्टमरार्जितोऽघनिचयो दाताऽन्यथा दुर्गतिम् ॥२२॥

धर्म स्यात् प्रभुशासनोन्नतिकर सत्थापितो जन्मना,
दान चेन्निरघ विधाय विधिवच्छील धृत निर्मलम्।

पूर्वोपार्जितपापपङ्क्तिविलयेऽसाधारणं कारणं
तप्तं दुष्करमुद्धृतिकरतपो मावं च भव्या धरेत् ॥२३॥

या श्रद्धाभरसंयुता, जनगणो यां संस्तुते शीलतः,
वंशौ द्वौ विशदीकृतौ सुकृतितः सज्जन्मवत्या यया ।
यस्यै धर्मपरः सदा नतिपरो, यस्या गुणानां व्रजः,
सङ्घे सञ्चरते मतिश्च तरुणा जायेत यस्यां यशः ॥२४॥

नारी यद्यपि निन्दिता श्रुतधरैर्वाक्यप्रबन्धोद्धुरैः,
स्थाने स्थान उपोढसन्मतिभरैः सा नैव जातिद्विषा ।
किन्त्वेतैः पुरुषप्रधानमतगं संश्रित्य वाक्यव्रतं,
स्त्रीराश्रित्य निरूपणे पुरुषगा सैवादृता पौरुषे ॥२५॥

स्याद्वादो जिनराड्मतेऽप्रतिहते दोषैर्गुणैः संश्रिते,
सोऽनेकान्तनिरूपणेन सफलः सर्वामपेक्षां दधत् ।
नास्त्यत्राश्रयता स्त्रियामघततेः सम्पत्तु सम्पद्वते-
र्हीनो दोषगणेन ऋद्धिवरको नैवेति नो मन्यते ॥२६॥

साधून् यथोद्दिश्य जिनेन्द्रमार्गे, दोषाः श्रमण्याः प्रतिपादिता बुधैः,
त एव साध्वीव्रजसङ्ग्रहे स्युः, निर्ग्रन्थवर्यानपि संश्रिता हि ॥२७॥
कामः स्त्रिया यद्गुणितश्चतुर्भि-र्नराचदेतत्पृथगस्त्यपेक्षया ।
ज्योतिस्तृणानां झटिति प्रजायते, निर्वाति चेत्थं न च फुम्फुमेषु
( कारीषेषु ) ॥२८॥

स्फुलिङ्गसंयोजनतस्तृणानि, ज्वलन्ति घट्टादियुताग्नितोऽपरः ।
शाम्येच्च तार्णो द्रुतमेव नान्य, इति प्रबोधात् स्मरकारणं त्यजेत् ॥२९॥

साधुस्रनाना न चतुर्थयामो-ऽपवादभूर्यत्करण न तस्य ।
रागद्विपौ चेत्स नरात्मनस्त-न्नचाङ्गनाना [illegible] गतापवाद ॥३०॥

इत्यस्ति शास्त्रे मिथुने श्रमण्या, द्रव्ये, न भावे भवनस्य सम्भव ।
हठप्रकारस्य यदस्ति तस्या, सुसम्भवा नैव तथा सुपुस्सु ॥३१॥

अत प्रयत्नात् स्वयमादरेण, वृद्धादियत्नेन सुरक्षितत्वम् ।
शील स्वयशस्य यत् हि जीवित, मत्वेति शील परिरक्षणीयम् ॥३२॥

अत कवीशै सुकलत्रनाशे, यथा समं घोषितमेति सत्यताम् ।
नाशो गृहस्येतरजन्मनाशे, घुष्ट तथा नो कविना जनेन ॥३३॥

यथा हि शस्यस्य धरानुमत्ति-स्तथा न कण्यन्दसमीरणानाम् ।
अनुश्रितिस्तद्वदिहाङ्गनाना, सस्कारवृत्ति सकले स्ववशे ॥३४॥

शरीरतत्त्व रुधिरानुसर्त-रक्त च नार्यागतमेव मूलात् ।
मातृप्रसूते तनुतत्त्ववेत्ता, परीक्षते ह्यस्मिन्न विवादे ॥३५॥

यस्मान्माता प्रसूते शिशुमनघपद तेन सा गीतिमाप्ता,
सत्पुत्रादीन् 'जगत्या प्रचुरगुणगणे गार्गिमातेति काव्ये ।
शास्त्रे रत्नप्रदीपप्रवितरणकरा रत्नकुक्षिर्नमस्या-
ऽऽराध्या सा सर्वलोके त्रिभुवनपतिमिरानिरम्येति सोक्ता ॥३६॥

ख्यातो जिनेन्द्राऽऽगम एप शब्द , स्त्रिया च यद्वत्पुरुषेऽपि तद्वत् ।
जिनेन्द्रवाक्यादिपु सुष्ठु देवा-दनुप्रियेति प्रयुतो न भिन्न ॥३७॥

सङ्घेऽपि सम्बोधनमेतदेव, श्राद्धी तथा श्राद्धगणो मिथस्तु ।
हेशब्दपूर्व हि पद तमेन नार्या न तस्मात् क्वचिदप्यधस्त्वम् ॥३८॥

सर्वाङ्गिकीं कोऽपि करोति भव्यः, समस्तसङ्घे परमादरेण ।
सर्वत्र कुर्वन् प्रथमं द्विधा त्रिचां, विशेषहीनं सधनाधनाश्राम् ॥३९॥

श्राद्धीनां स्याद्धर्मक्षेत्रेऽमलत्वं, कुर्याद्येनोद्वाहकालेऽपि पूजाम् ।
धार्म्यो महिमाऽनून एषोऽपि तादृक्, पापारम्भे साधयेद्धर्ममादौ ॥४०॥

मतिर्या भवान्ते गतिः साऽपरत्रा, वाण्यत्र प्रेत्यास्ति समानलेश्या ।
च्यवे भवे चेति विबुध्य सर्वा-नार्त्तान् सुनिर्मापयितुं यतेत ॥४१॥

आराधनां निर्मलभावपूर्णां, चतुःशरण्या शुभपापकर्मणोः ।
प्रशंसया निन्दनया च भावात्, स्वान्यातुरत्वे हि करोति वर्याम् ॥४२॥

यथा परैः प्रेत्य सुरालयानां, मुक्तेश्च गीतः परिदायकत्वात् ।
महेश्वरः सर्वजनोपकारी, मिथ्येचसाराधनकारिका तथा ॥४३॥

यान्ति प्रशान्ताः प्रभुभक्तिवाणी-प्रणोदिताः स्वर्गपदं शिवं वा ।
तत्कारिका किं नहि कारिका हि दुग्धान्न किं म्रक्षणसर्पिराप्तिः ॥४४॥

कुर्वन्ति वैवाहिकमत्र पुत्र-पौत्र्यादिकस्य निजबान्धवः ।
तथापि तच्चण्डक्षतिनिवृत्त्यै, नीतौ स्थिताः स्वर्गशिवाप्तियोग्याः ॥४५॥

तथाविधानीति पराभवेयुः, सत्कर्म कर्तुं शिवमार्गमेतुम् ।
अतः स्वकीयं कुलवंशयुग्मं, पुरा हि रक्ष्यं सुधियेति गीतम् ॥४६॥

यथाऽऽर्यदेशः सुजनोपकारकृत, सङ्गं विधायार्हतसाधुचैत्यैः ।
वंशः कुलं वा मतिभाववत्यपि, विधाय तैः सङ्गमिहोपकारी ॥४७॥

दत्ता कुले यत्र स्वसा च पुत्री, धर्माऽपि तत्रत्य उपासनीय ।
तत सदाचारभरान्तराणा, रक्षार्थिनी ता न परत्र दद्यात् ॥४८॥

अत्रत्यवैतत्य उपागते स्या–द्वयर्थेहिनी धर्महतेऽन्यभाविकी ।
आद्याऽल्पकाल परथा परा तु, वित्त्वेन्मन्यनितये न दद्यात् ॥४९॥

यथानुराग आत्मन प्रस्वान्ततोऽधिकोऽस्या निजपुत्रयग ।
भिन्न तु धर्मऽधमस्य सश्रयो, नीचैस्तरा घृत्तिरगोधमोहिनी ॥५०॥

सिद्धाद्रिप्रमुखप्रशान्तगिरिषु प्राप्ता परा कोटय–
स्तत्स्वप्नेऽपि न याति सम्भजपद येषा न श्रद्धाऽनघा ।
मोक्ष किन्त्विदमात्मनशसहजा सस्कारवार्तामति–
येषा ते सुतरा निधाय सुमतिं तीर्थानि तानि स्मरेत् ॥५१॥

आद्या सिद्धा समग्रे भवभवविगमावाप्तमोक्षालये या,
साम्प्रत्या जैनमार्गेऽनसूमितिसुपमदुष्पमाया जिनाम्या ।

नैवाऽऽसीत्तत्र तीर्थं निनगुणमहिमोल्लासितात्मप्रभावान्,
मत्वैव स्वात्मशुद्धयै जिनपतिरचनाच्छ्राविकाणा प्रयत्न ॥५२॥

वर्गे श्राद्धया प्रणम्योऽविचल्सुमतिधर्मकार्ये सदोत्तो,
देवानामप्यचाल्यो बहुतरविधिभि सयमादाप्ततत्त्व ।
तत्रास्ति ज्ञातमग्न्य चरमजिनपते नागभार्या प्रवेका,
सम्यक्त्वे देवतुष्टो जिनवरशिवगे शुद्धसत्याऽमदृष्टि ॥५३॥

समग्रो नगर्या जनो भ्रान्तिमाप्त , यदाऽमज्जिनेशस्यागम कर्तुमिष्ट ।
स एवाम्बड प्राप्तजनार्चनादि, न मुग्धा सुसम्यक्त्वधरा न याता ॥५४॥

जम्बूस्वामिन आप्तसुन्दरवराः प्रेयस्य आप्तादरा,
अष्टापि प्रवरां व्यधुः समगतां तत्कृत्यकृत्योद्यताः।
यातेऽस्मिन् मुनितां स्वयं गतमदाश्चक्रुर्मुनित्वं परं,
जाताः संयतमार्गसाधनपराः श्रीचन्दनायाः पुरः ॥५५॥

श्रीवज्रप्रसवितृसंयमकथां लोकात्ततश्चागतां,
श्रुत्वा श्रीधनगिर्युदारचरितां वव्रे सुनन्दा वरम्।
जातं वज्रप्रसुं ददौ लघुतरं षण्मासमात्रं शिशुं,
तां को न स्तविता जिनागमरुचिः श्राद्धीं परं पावनीम् ॥५६॥

श्रीहेमचन्द्रं प्रभुमार्पिपद् या, श्रीदेवचन्द्राय मुनीश्वराय।
भर्त्तुः सुकृत्यं परमं विदन्ती, श्राद्धया अहो वा स्तमतीत आदरः ॥५७॥

श्री वस्तुपालाग्रजतेजपालं, प्राप्तं निधानं खनितुं विचित्तम्।
दृश्यं जनैश्चौर्यकृतावनर्ह धेयं तथेत्युक्तमलोभपत्न्या ॥५८॥

श्राद्धी सुभद्रा जिनमार्गमोदा, जलेन द्वारत्रितयी पुरस्य।
सतीत्वभावस्य महाप्रभावं, जनेषु जनयन् पुनरुद्घटित्री ॥५९॥

राज्ञा सुशीलो महिषीप्रदत्ता-भ्याख्यानयुक्तो हननाय युक्तः।
सुदर्शनो रक्षित आर्यधृत्या, श्राद्धया स्वकीयाचलधर्मभावात् ॥६०॥

श्रीरेवती नाम जिनस्य वद्धवा, भावी जिनो तीर्थपदानशक्तेः।
निर्णीय को न स्तविता जिनानु-यायी वशं श्राद्धपथोन्मुखां स्त्रिम् ॥६१॥

शाही अकब्बरमुदारमतिं दयायां,
लीनं न वेत्ति जिनशासनतत्त्ववेदी।

सर्वाऽप्यसौ सममवत् प्रभुहीरनाम्ना,
मूलं तु तस्य तप आन्तिश्चम्पिकाया ॥६२॥

भवेत् प्रतिष्ठा जिनबिम्बराज्या, प्रभुत्वभाज यदिय विदीपयेत्।
सर्वाङ्गशुभापि न पूज्यतापद, श्राद्धया युतोऽस्या(न) विधायको
धव ॥६३॥

चैत्ये च यत्रापि जिनाकृतीना, पटे प्रतिष्ठापनमाद्रियेत।
तत्रापि तासामधिकारभागो, विशेषतश्चात्र विनामनाविधौ ॥६४॥
या सद्धना अत्र निमाननाविधौ, समाद्रियन्ते न च ता अतीयु।
दु खानि दौर्भाग्यभवानि कान्यपि, यावद्भवं शान्तिसुखान्युपेयु ॥६ ॥

यद्यप्यनीशे सत्कारलेश, शरीरशोभावहको न्यषेधि।
तत्सत्कपौपस्य निषेधनात् पर, तीर्थान्नतौ किन्तु स सेवनीय ॥६६॥
यदेव कर्माश्रवणाय कृत्य, ससारहेतोरघनिर्जराय।
तदेव धर्मोन्नतिकार्यहेतो-र्यदाश्रवास्ते हि परिश्रवा यत् ॥६७॥

जिनाधिपाना रुचिराणि यानि, दिनानि कल्याणकराङ्कितानि।
एवानामारि-रथोत्सवैश्च, श्राद्धीजन शोभयतेऽङ्गचीरै ॥६८॥
कल्याणकेषु प्रवरा न पूजा, श्राद्धीजनो वाऽपर आहृत मन्।
निर्नेश्वराणामभिधाय घस्रे-ष्वन्येषु कुर्वन भवत्युदार ॥६९॥

चत्वार उक्ता श्रमणप्रधाने, सङ्घे विभागा परमप्रगामी।
कार्येषु धर्मप्रवरेषु वग, श्राद्धयो यदो भूरितमा सुयत्ना ॥७०॥

गृहेषु धर्मीय उत्तरभाव, प्रवर्तते तत्र स एव भूरि।
समानि कार्याणि तदुत्थमत्या, धर्मं हि जैनेश्वर आदरेण ॥७१॥

श्राद्धयश्च दे०यश्च न विमुत्ववत्य-स्तथापि साम्येन नयन्ति सर्वान्।
श्राद्धाँश्च देवाँश्च जिनोक्तधर्मे, स्वयं दृढाः कुर्वते धर्मरक्तान् ॥७२॥

यथा परेषामधिकारिता नहि, गृहे च धर्मे व्रतमुख्यकेऽपि।
तथा न जैनेष्विति सर्वधर्मेऽप्यासां समो ह्येवमतोऽधिकारः ॥७३॥

नासां धर्मो वंशजात्यादिरुद्धो, यद्धर्मोऽत्राराधनीयः स्वभावात्।
आत्मार्थं तद्धारयन्त्या नितान्तं, गीता तीर्थैर्निन्दयित्वा न्वनर्हा ॥७४॥

जैनः स स्यान्मातृवर्गेण तुल्याः, सर्वाः श्राद्धीर्मानयित्वा महेद्यः।
मोक्षार्हायाः सप्तक्षेत्र्या विभेदं, चित्ते नैव सन्दधीताचलेक्षः ॥७५॥

इति त्रिंशोऽध्यायः।

---

। एकत्रिंशोऽध्यायः। ( देवाधिकारः )

जैनः स एवार्हतधर्मधारी, यको भवान्धोरवनोऽर्हताऽभूत्।
नास्त्यन्यधर्मप्रवणो जनेऽस्मिन्, पुनातु देवो भविनो जिनोऽर्हन् ॥१॥

कालादनादेर्निजभव्यतायाः स्वरूपमन्यासदृशं दधानः।
यथाऽऽम्रवृक्षः स्वकजातिबीजात्, पुनातु० ॥२॥

भवस्वरूपे भवबालकाले, जहौ न तादृग्वरभावसत्ताम्।
मलीमसं स्वर्णमयो विभिन्नं, पुनातु० ॥३॥

तथा तथा कालविवर्तसङ्ख्या-तीतं भवाब्धौ परिवर्त्तमानः।
तुल्यं परैः कालभवानतुल्यः, पुनातु० ॥४॥

यथा महामानुतलाद्वहन्त्या , सुवाहिनीश्रोतसमान्धसा ।
चिन्तामणिर्नाम्लकृन्तुल्य , पुनातु० ॥ ॥

परोपकारप्रवणैकचेता, निनद्ध्य कश्चिज्जिनकर्म जीव ।
गतोऽन्यजन्मानि वराणि तानि, पुनातु० ॥६॥

नष्टे तु तस्मिन्नपतीर्थपत्ने, भवेज्जनाना प्रवरा गतिर्ना ।
शान्ता सुधा नैव गुणाय लेशात्, पुनातु० ॥७॥

पर तथाभव्यभर जिनत्व, वर न नद्ध यमतीह कश्चित् ।
पयो ददाना सुरभिन चाभा, पुनातु० ॥८॥

जिनेन्द्रनामार्जितमन्यथा वा, निबाध्यतेऽन्त्ये भवने तृतीये ।
अर्हच्छिवाप्तादिपदेषु भक्त्या, पुनातु० ॥९॥

जिनेन्द्रनाम्न्येवमुपार्जितेहि, तिर्यक् पद नेव कदापि गच्छेत् ।
परार्थकामी न भवेद्धि तिर्यङ्, पुनातु० ॥१०॥

यथाऽऽगमिष्यन्नपभोगभाव, रत्न न वार्धेस्तलगाकरे स्यात् ।
नोत्पद्यते भाविजिनोऽसुरादिषु, पुनातु० ॥११॥

स्वप्नप्रलम्भो न मनोऽनुसारी, यस्यागमे कुक्षितले सवित्री ।
पश्यत्यनन्य चतुरर्बितान् दश, पुनातु० ॥१२॥

हस्त्यादिका नानुगतिर्हरीणा, सप्तस्वपीन्द्रेषु भवेत प्रलम्भे ।
गजादिका ह्या गति प्रधाना, पुनातु० ॥१३॥

जन्मक्षणे शक्रशतावलीढ, चकार मेरौ नियताभिषेचनम् ।
षड्युक्तपञ्चाशदपि कुमार्य , पुनातु० ॥१४॥

यस्याम्बिकाकुक्षिरपेतपङ्का, जम्बालमुक्ताऽप्रकटोद्भवाङ्का ।
सुरासुरश्रेणिशतेन वन्द्या, पुनातु० ॥१५॥

जन्माभिषेकेऽप्यमराचलेऽगुः; सुरासुराधीश्वरकोटयो मुदा ।
अष्टप्रकारार्चनमावि(द)धातुं, पुनातु० ॥१६॥

बाल्ये न मातुर्विदधाति पानं, स्तन्ये सुराधीशशतेन नीताम् ।
सुधामपादङ्गुष्ठगां मुदाढ्यः, पुनातु० ॥१७॥

चकार चेष्टां लघुदीर्घनीत्यो–रुरोद बाल्ये न महेश्वरोऽयम् ।
वंशे महेन्द्रैः कृतराज्यवृद्धौ, पुनातु० ॥१८॥

परैर्न येषामवकल्प्यता स्याद्–तिशयाँस्त्रिशतमाश्रिताः समम् ।
चतुर्भिरार्हन्त्यपदोदितास्ते, पुनातु० ॥१९॥

क्षेमाय विश्वस्य विधाय दीक्षां, जित्वोपसर्गांश्च परिषहाँश्च ।
निर्मूल्य घातीन्यखिलानि सर्वविद्, पुनातु० ॥२०॥

प्राग्बद्धतीर्थंकरनामकर्मणो, द्विधोदयोऽर्चाश्रमणादिसिद्ध्या ।
द्वितीयमार्हन्त्यपदेन देशना, पुनातु० ॥२१॥

यद्दीक्षितानां भवतीह याव–त्तीर्थं प्रवाहो न नवोऽपरं विना ।
भाग्यात्तु भव्यत्वयुतात् स एव, पुनातु० ॥२२॥

तीर्थं द्विधाऽगारपराश्रितं दिशन्, कार्येण युक्तं शुचिकारणेन ।
जनाः प्रभूताः क्रमसिद्धिसाधनाः, पुनातु० ॥२३॥

वर्गद्वयेऽपीष्टपथानुसार–स्ततश्च साधून् गृहधारकाँश्च ।
नुनोद धर्मार्थमरक्तदोषः, पुनातु० ॥२४॥

कायक्लिणो नैव महाँल्लधुर्वा, सत्साध्ययुक्तस्त्वपधीरणापम् ।
चतुर्विध तन्नमतीह सङ्घ, पुनातु० ॥२५॥

दृग्ज्ञानकर्माश्रवरोधयुक्त, मार्गं सदा श्रोतृगण दिदेश ।
तदुक्तितो मान्यपद हि तीर्थं, पुनातु० ॥२६॥

अर्हत्त्वमुरयजितसम्नृतिक्रान्तभावा–
त्रिंशत्पराऽरयधिकसयुज आप्तयोग्या ।
तीथप्रवतनविधौ सतत स्वरूपा–
वहन्पुनातु सतत भविनो भवान्ते ॥२७॥

अर्हत्त्वनाम्न उदय फलतो जिनत्वे,
पूर्वष्वनेकजनिपु प्रचिचिन्तितोऽन्त ।
अन्त्ये गुणे हि भवनान्न तनुक्रियाया, अर्हन् पुनातु ॥२८॥

यत्कमज फलमिहाचनमर्हत स्यात्,
तद्यानदेप भन इत्यपयोगितायाम् ।
देवै कृत सप्रतिहारमयोगिभान–महन् पुनातु० ॥२९॥

तीथप्रवृत्तौ सकलातिशेपा, अर्हत्त्वमुरया जिनपात्ममस्था ।
पूजा (रक्षा) दिकास्त्वन्त्यक्षण त्वराप्य, पुनातु० ॥३०॥

मुक्तेरवाप्तौ द्वितयी ध्रुव स्या–दुत्सङ्गपर्यंकमयी दशा तु ।
तेन प्रतिच्छन्ददशाद्वयी वत्, पुनातु० ॥३१॥

जगज्जनि–स्थेम–लयै प्रवक्त्य, जगान्न तेपु प्रभुता दधाति ।
मोक्षाध्वदीप्ते प्रभुता दधान, पुनातु ॥३२॥

न स्त्री न चास्त्रं न च वाहनानि, न स्वर्गदानादिवृथाप्रचाराः ।
कल्याणकृत् किन्तु शिवाध्वसिद्धिः, पुनातु० ॥३३॥

गतो न गन्ता न च गच्छतीशः, परां गतिं सिद्धिविनाकृतां यः ।
भवाटनाद्दूरगतो नितान्तं, पुनातु० ॥३४॥

न कर्म तृष्णा न च रागकोपौ, नाज्ञानलेशः परमात्मताभृत् ।
न तीर्थनाशाऽवनवद्धलक्षः, (अर्हन्) पुनातु० ॥३५॥

जैनः स एवात्यटनं भवाब्धौ, न वाञ्छति प्रेप्सति सिद्धिमार्गम् ।
जन्मान्तकेभ्यो भयभृच्छिवेप्सुः, पुनातु० ॥३६॥

इति एकत्रिंशोऽध्यायः ।

---

। द्वात्रिंशोऽध्यायः । ( साध्वधिकारः )

जैनः स एव मनुते मुनिराजपादान्,
संसारसागरतटप्लवने सुपोतान् ।
दारैर्धनैश्च रहितान् धृतधर्मयोगान्,
सेव्याः सदाऽऽदरभरेण सुसाधुवर्याः ॥१॥

ज्ञात्वा जिनेशवचनाद्यदि वा मुनीशात्,
( गुरूक्तेः ) स्मृत्वा च पूर्वजनुषं भवभावभीरुः ।
षट्कायहिंसनभवान् प्रचुराघहेतून् (शिवमार्गलीनाः) सेव्याः० ॥२॥

बुद्ध्वा भवोदधिगता विविधा व्यथास्ता,
जन्मान्तकाऽऽधिविविधामयजालजाता ।
ज्ञात्वा सदन्तकरण मुनिमार्गमेक, सेव्या० ॥३॥

पोतो यथा परतट नयतीद्धमाण्ड,
निर्यामकेण मतिसाधनसयुतेन ।
धर्मं वरा भविजनोद्धरणैकलभ्या, सेव्या० ॥४॥

लोक प्रदीप्तमखिल जननानलेन,
मृत्यान्जौ यममत्याश्च निबुध्य मत्या ।
शान्त्यै जिनेशगदित वरधर्ममाद्, सेव्या० ॥५॥

मातापिता सूनुरपारमोहा, अथ समस्त वृजिनौघलातम् ।
गृह्णन्ति न प्रेत्य फल निदन्तो, सेव्या० ॥६॥

सर्वे जना ऐहिकसौख्यदुःख-समागमाना प्रचयात् प्रमीता ।
नातीतभाविभ्य इमे तु तेभ्य, सेव्या० ॥७॥

अर्था सना जनकुलागतनीतिरीत्या,
रक्ष्या भवन्ति गृहिणो न च जानते ते ।
दौर्गत्यपातिन इमे मुनिभिर्निसृष्टा, सेव्या० ॥८॥

सर्वार्थसाधनमिद नृपुरक्षय नो,
यस्त्वेति नाश बहुकारणान्वितम् ।
नित्त्वा सुमयमकृते परिरक्ष्यन्ति, सेव्या० ॥९॥

मत्वाह तत् प्रथमतो महिमानमुग्र,
धर्मस्य भोगफलयुग्ममिहानगार ।
सामान्यत परिचरे(द्) भ्रमरोपमान, सेव्या० ॥१०॥

नाज्ञानिवन्मधुकरैः समताऽत्र वृत्ते,
श्रामण्यमुक्तिसहिता सुगुणावलीष्टा ।
बोधेन युक्त उदयेप्सुरतो मुनीशः, सेव्याः० ॥११॥

प्राणाः परैः स्वे परिरक्षणीया, मता न तत्रास्ति दयाप्रचारः ।
प्राणैः स्वकीयैरपि जीवरक्षाः, सेव्याः० ॥१२॥

सत्यं परेषां परमं हि तत्त्वं, दयाङ्गिनां जैनमते तु तत्त्वम् ।
स्वजीवनाशः परहानिमुक्त्यै ( गुरुः ), सेव्याः० ॥१३॥

सत्यं व्यलीकमुदितं ललनादिहेतौ,
रागो द्विषा चात्र पराघबीजम् ।
त्यजेदलीकं भवभृत्सुरक्षं, सेव्याः० ॥१४॥

विप्रा यथोत्पादमलीकमुक्त्वा, नादत्तमत्र ग्रहणे मनन्ति ।
इमे पराक्ये तृणमात्र आज्ञां, सेव्याः० ॥१५॥

परे नियोगं विधिमार्गमाहु–रिमे त्रिधाऽब्रह्म परित्यजन्ति ।
तैरश्च–मानुष्य–सुराङ्गजातं, सेव्याः० ॥१६॥

स्वीयं ग्रहं पापमयं परेऽगु–रिमे कृतं कारितमादृतं पुनः ।
स्वत्वेन वर्ज्यं न परिग्रहत्वं ( स्तुत्याः ), सेव्याः० ॥१७॥

महाव्रतानां परिपूर्णतायै, स्वाध्यायशान्त्योः परिरक्षणाय ।
त्यजन्ति दोषाकरमन्धभोगं, स्तुत्याः० ॥१८॥

उरीकृतानामवनं सुदुष्करं, क्षणे क्षणेऽन्ये यत आत्मभावाः ।
मत्वेति निस्सङ्गतया व्यहार्षुः, स्तुत्याः० ॥१९॥

सत्र पूज्या श्रमणा समस्तै-र्धर्मप्रचारो मुनिसङ्गमोत्थ ।
नृपोऽत्र आन्ध्रादिषु सयत्नानऽमुक्, स्तुत्या ० ॥७०॥

तावद्धि तोष जिनराजगीत, यतत यावन्मुनिराजसङ्गम ।
अतो मयूरोपमिता गृहस्था , स्तुत्या ० ॥७१॥

धर्मो मुनिभ्य प्रददे जिनेशै , परप्रदानाय समासमक्षम् ।
नीय धरन्तो मुनयोऽदुरेन, स्तुत्या ० ॥७२॥

न किञ्चनास्तीह मुनीश्वराणा, विहाय दृष्ट्यादिगुणान् जगत्याम् ।
दु खस्य मूल पर इत्यमोज्झन्, स्तुत्या ० ॥७३॥

योग्येषु देशेषु परिभ्रमन्त , श्राद्धोपदेशेन नरानि कुयु ।
चैत्यानि जीर्णानि समुद्धरेयु , सेव्या ० ॥७४॥

तीर्थानि पूर्वर्षिमहाप्रभाव-विद्योतकान्याप्तमहत्त्ववन्ति ।
प्रभावयन्तश्च समुद्धरन्त , सेव्या ० ॥७५॥

क्वचिद्गुहाया विजने वनान्तरे, सान्वप्रभागे सरितस्तटे वा ।
निराकुले पण्डितवीर्यवन्त , सेव्या ० ॥७६॥

उत्सर्गमाद्दत्य समस्वभावा , मित्रे रिपौ जीवन आत्मनोऽन्ते ।
मृतिर्हि येषा क्षणकालभूता, सेव्या ० ॥७७॥

गुरूपदेशाद् भवितव्यताया , प्रमादत स्वीयसमुद्यमाच्च ।
लब्धेऽपि मार्गे शिवगा भविष्या, सेव्या ० ॥७८॥

आत्मानमात्मप्रतिवद्धरूपं, जानन्त आत्मव्यतिरिक्तभिन्नाः।
कापायिकं स्थानमपाहरन्तः, सेव्याः० ॥२९॥

ये नित्यरूपं प्रवरं विदन्त–श्चैतन्यसौख्यैकमयं जिनोक्तेः।
अधिष्ठिताः स्वं निजरूपहेतोः. सेव्याः० ॥३०॥

ये पौद्गले नैव सुखे निमग्ना, न द्वेपिणः पूर्णनिजस्वरूपाः।
निरुध्य योगान् विगताघबन्धाः, सेव्याः० ॥३१॥

परे हि तीर्थ्याः निजसेवकान् सदा, तैरश्चभावप्रभवं निदर्श्य।
दुःखं विपण्णा भवभावमेते, सेव्याः० ॥३२॥

पूजा परीवारकृते न दीक्षां, सम्यक्त्वचारित्रविदादिरूपाम्।
चक्रुर्भुजिष्ये भवमन्थनाय, सेव्याः० ॥३३॥

मुक्त्यर्थमात्ता य इमे परेभ्य–स्त्यजन्ति तानंशुकवासमादीन्।
विमुच्य बोधादिमयं तु जीवं, सेव्याः० ॥३४॥

न वाहनं प्राप्तपुरस्य काम्यं, नौर्वा समुद्रस्य तटं गतानाम्।
मत्वेति हात्वाऽपरमात्मलीनाः, सेव्याः० ॥३५॥

जैनः स एवाखिलतत्त्ववेत्ता, मार्गं मुनीनां दृढभक्तिभावः।
सदा धरेस्तेपु गतः शरण्यं, सेव्याः० ॥३६॥

इति द्वात्रिंशोऽध्यायः।

। त्रयस्त्रिंशोऽध्याय । ( धर्माधिकार )

जैन स एव मनुते जगदेकसार, हेतुस्वरूपसुविशुद्धमुदाररूपम् ।
सार्वज्ञ्यलाञ्छितजिनैरुदित सुधम,
धमा जिनोदिततया भविना शरण्य ॥१॥

सवपु धर्म उन्ति परमार्थसारो,
दौर्गत्यवारणसह सुगते प्रदाता ।
तीर्थ्यैं समैस्तत इय प्रतितन्त्रसिद्धि- धर्मा० ॥२॥

सामान्यमेकमिह नेत्र विलोक्यते हि-
स्तस्य स्वरूपममलाशयशुद्धिसिद्धम् ।
उक्त्वापि मङ्गलतया जगुरस्य सङ्ख्या, धर्मो० ॥३॥

शब्देन नैव न च तन्मनसाऽस्य जन्म,
किन्त्वस्य भेदधरणात् त्रय एव भेदा ।
तच्छून्यतामुपगते न हि धर्मतत्त्व, धमा० ॥४॥

स्वप्राणनाशसमयेऽपि न पर विहिंस्याद्,
यत्नश्च सत्रभविनामवनाय नित्यम् ।
प्रागबद्धदुष्टदुरितोपशान्ति , धर्मो० ॥५॥

देवा प्रमाणमिति धर्मधरानमन्ति,
तेऽतोऽभ्युपेयममल श्रुतवाक्प्रणीतम् ।
मिथ्यात्वसङ्गतिमियेदमसाध्यमुक्त, धमा० ॥६॥

शेप समग्रमुदित द्रुमपत्रनीय, सिद्ध ततोऽधिकरण त्रितयप्रसिद्ध्यै ।
धमस्य धृत्तमनगारपदोपशोभ, धर्मो० ॥७॥

निर्दोषधर्ममपवाधपदोदयाय,
प्रोच्याऽसमर्थजनतापरिसाधनाय ।
तस्येत्यगारसहिताय लघुव्रतानि, धर्मों० ॥८॥

शक्तेतराप्तिविधया महतां प्रयत्नः,
सर्वेभ्य उद्यततमा हितकार्यदक्षाः,
लब्ध्यो गुणाय मुनिताऽभ्यसनाय कृत्या, धर्मों० ॥९॥

मुख्या निवृत्तिरुदिता यतिधर्मसार्थे,
दानादिवृत्तिसहिता गृहिणां तु धर्मे ।
गृद्ध्युग्रकामरसनार्त्तनिवर्त्तनाय, धर्मों० ॥१०॥

यत्राऽस्ति दानमुदितं ममताविमुक्त्यै,
स्वायत्ततेन्द्रियगणस्य हृता सुशीलात् ।
( भवे भवे धर्मपरं कुटुम्बं, धर्मों० )
क्षान्त्यै तपोऽघगमनाय शुभस्तु भावो, धर्मों० ॥११॥

अर्थोर्जितिर्नसुदृशां किल धर्मवृद्ध्यै, लब्धस्य तस्य सुकृतावुपयोग उक्तः।
मोक्षस्य वर्त्म परसङ्गतिनिःस्पृहत्वं, धर्मों० ॥१२॥

संसारवासजनितः प्रमदप्रकर्षो,
नो तादृशो भवति यादृश आत्मकार्ये ।
तस्यैव लब्धिरुदयाय भवाङ्गिनां स्याद्, धर्मों० ॥१३॥

जन्मानि जन्मजलधौ भविनामनन्ता-
नावर्त्तकान् प्रकटितान्यघभारभाञ्जि ।
दानादिधर्मसमलङ्कृतमेकमेतद् धर्मों० ॥१४॥

इष्टस्य सिद्धिरधिकमतिसाधनार्थे-
नास्त्यन्तरेण विदुषामपि तान् कदाचित्।
धर्मस्य सिद्धिरमला भवितव्यताया, धर्मा० ॥१५॥

पुण्यादिभिः प्रभवमेति नरत्वमुख्य,
कालस्तु मुख्यपदमन्त्यविवर्तभावे।
वीर्यं ह्यपूर्वमुपयाति शुभायतिर्नो, धर्मा० ॥१६॥

कर्माणि यानि विविधानि गतादिकालात्,
तेषां शमेन नियमः शुभधर्मलाभे।
जीवस्तनोति शममेतमुदारवीर्य, धर्मा० ॥१७॥

जीवः क्रमेण शिवमार्गविधानसिद्धौ,
यत्नं तनोति दुरितानि तथाऽपयान्ति।
हेतुर्हि कर्मविलयोऽङ्गिविकाशसाध्यो, धर्मा० ॥१८॥

पातोऽपि सम्भवपदं न तथापि यत्नो
जीवेन सृष्ट उपयाति न निष्फलत्वम्।
अन्तो भवस्य नियतः शुभधर्मभाजां, धर्मा० ॥१९॥

पञ्चेन्द्रियत्व-नरजातिमुखा समग्रा,
लब्ध्वा सुसाधनततिं नर एति मोक्षम्।
साध्य तु बोध-दृशि-सच्चरणाग्रिमत्व, धर्मा० ॥२० ॥

सम्यक्त्वमाप्यत इहाङ्गिकृतात् सुयत्ना-
च्छात्रं व्रतं च भवितव्यतया न किञ्चित्।
कर्मादयो निगदिता सफला जिनेन, धर्मा० ॥२१॥

भाव्यं यदेव जगति प्रथनं हि तस्य,
नाकारणं भवति कार्यमनादिकालात् ।
यत्ने कृते सतिमतेतरथाऽपि कार्यं, धर्मो० ॥२२॥

ज्ञानानि यद्यपि मतानि बुधैस्तु पञ्च,
मोक्षैकसाधनमलं श्रुतमेकमेव ।
तत् प्राप्यते तु मतिसज्जनसत्तिभावात्, धर्मो० ॥२३॥

लब्धेऽपि लोककलनैकगुणे प्रबोधे,
निःशेषकर्मविगमो न विनैव (विहाय) यत्नम् ।
श्रेणेरदृष्टनिचयेऽपगतेऽपि जीवाद्, धर्मो० ॥२४॥

न प्रेम भक्तिरुपवास उदारभावः,
शुद्धा न मोक्षविधये विहिताः कुपात्रे ।
निर्दोषधर्ममधिगत्य समे फलाढ्या, धर्मो० ॥२५॥

धर्मोज्जिनेशगुरवोऽपि च धर्मवृत्तिं,
कुर्वन्ति सन्ततमिमे दुरितालिनाशात् ।
धर्मोज्झिते नहि जिनत्वगुरुत्वभावो. धर्मो० ॥२६॥

दीपाद्भवेन्मणिगणस्य यथार्थबोधो,
नैनं विनान्धतमसेऽर्घमतिस्तदीया ।
धर्मस्य बोध उदयेद्गुरुदेवभावाद्, धर्मो० ॥२७॥

अङ्गी यदा चरममागत आत्मभावा–
दावर्त्तमात्मनिचितं विदधाति धर्मम् ।
भावोद्धभावसहितः प्रवरोदयाङ्गं, धर्मो० ॥२८॥

जैनः स एव मनुते जिनराजगीतं,
प्रोक्तं सभासु गणभृन्नियमेन धर्मम्।
यावत् प्रभावममलं भविभिर्धृतो-हि, धर्मो० ॥३६॥

इति त्रयस्त्रिंशोऽध्यायः।

---

।चतुस्त्रिंशोऽध्यायः। (ज्ञानाधिकारः)

जैनो यो मनुते सदा सहगतं सज्ज्ञानमात्मश्रितं,
ज्ञानानन्दमयो यतो जिनमते जीवः समस्तो मतः।
यावद्येन विनाशितं भवति तत्तस्यावृतेः कारकं,
सज्ज्ञानं श्रियतां सदा भविजन! स्वार्थप्रबोधोद्यतम् ॥१॥

सूक्ष्मोऽसौ भवचक्रमध्यमुदयन् ज्ञानस्य लेशं दधद्
भ्रान्तोऽनादित आवृती अतितरां सर्वत्र चैकेन्द्रियः। (?)
यत्कालं व्यवहारवर्जिततनुस्तावच्छरीराल्लघुः, सज्ज्ञानं० ॥२॥

आयातः पृथिवीमिदां तनुतरां प्रत्येककायं धरॅ-
श्चैतन्यं व्यवहारितामनुगतः प्राप्नोति सञ्ज्ञां पृथग्।
प्राक्कालादमितां जघन्यपदिकां वृद्धिं समेतोऽसुमान्, सज्ज्ञानं० ॥३॥

एवं वृद्धियुतो मतावतितरां वार्वायुतेजोयुते,
प्रत्येके च वनस्पतावनियमाद्वृद्धीतरे धारयन्।
स्पर्शांशेन पदार्थरूपमननादेकेन्द्रियत्वान्वितः, सज्ज्ञानं० ॥४॥

एवं य क्रमभाजन भवगणात्कायप्रजाद्वा भवन्,
ज्ञानस्यागणितेन भागमुपयन् ह्यर्यॆश्च भाव्याश्रयात् ।
सम्भ्रान्त स्वरजातित क्रमधर ज्ञानस्य पृथ्व्यादिषु, सज्ज्ञान० ॥५॥

पुण्येनापमितेन पुष्टिपर्वो यावद्भुवी सम्पतेत,
तावत्सङ्घटतेऽस्य वृद्धिसहित जिह्वेन्द्रियेणादिमम् ।
एव वृद्धिरपेक्ष्यतेऽक्षनिसृता शस्तेरसूना गणे, सज्ज्ञान० ॥६॥

यावन्नश्यति हन्यमानजनुष प्राणापरोपोद्भवा,
सा तावत्प्रमित यथोद्यतनर पाप समुद्घाग्रति ।
नैवात्रास्ति विशिष्टता भवभृतेष्वन्येषु जीवेष्वपि, सज्ज्ञान० ॥७॥

साधुभ्यो गुरुमिश्च शोधिकृतये जीवस्य दुःखार्पणे,
तत्तद्भेदमनुश्रितैर्लघुबृहत्पापोच्चयोच्छेदकम् ।
प्रायश्चित्तमनेकधात्ममननै सामर्थ्यमात्राश्रित, सज्ज्ञान० ॥८॥

द्विन्यायभसमन्विते भवभृति स्युर्गोचराल्लिप्ता,
स्वादाद्या रवणान्तका निजनिजाऽदृष्टोद्भसात प्राणिनि ।
तस्माज्जीवशरीरगा निगदिता चित्रा मुनीना कृति, सज्ज्ञान० ॥९॥

पञ्चाक्षत्वमधिश्रिता असुभृतो नानागतिं संश्रिता,
जाता तत्र विदा परा सुरभवे ह्यानुत्तरे दैवते (निर्जरे) ।
तत्तज्जातिसमुद्भवस्य विलयो ज्ञानस्य दोषावह, सज्ज्ञान० ॥१०॥

मानुष्ये व्यवहारमार्गसुगम सङ्केतसाध्य पर,
लिप्यादेर्जनित 'यदक्षरमव यच्चान्तरा चोयत' ।
तत्सर्वं व्यवहारमार्गपतित निर्दिष्टं श्रुत ख्यायते, सज्ज्ञान० ॥११॥

तत्त्वस्थं श्रुतमीर्यते श्रुतधरैः सर्वज्ञवाक्याश्रयं,
यत्त्यक्त्वा वचनं समस्तविदुषां नान्या प्रमाणान्विषा ।
तद्वाक्यैकनिवेदनं श्रुतिमतां सर्वार्थगं नापरं, सज्ज्ञानं० ॥१२॥

सर्वज्ञं वचनं समेतरगतं शृण्वन्त्यशेषाः सुराः,
तेषां नैव परम्परा न च गणी सूत्रालिकर्ता प्रभुः ।
पारम्पर्यमपीदृशं न च परं सूत्रार्थधाराः क्रमात्, सज्ज्ञानं० ॥१३॥

देवानां न विरागमार्गगमनं योगादिका न क्रिया,
मिथ्यात्वे श्रुतकेवलित्वहृतिवत् प्रेत्योद्भवं नो तथा ।
शास्त्रं तेन परम्परा श्रुतगता मानुष्यिकी केवला, सज्ज्ञानं० ॥१४॥

तिर्यञ्चो न यताः परम्परपदे दूरे परात् संयमात्,
श्वभ्रस्थाननिवासिनश्च नरका न श्रौतमाम्नातिनः ।
मानुष्या अनिशम्य केवलविदो नाम्नायवित्तास्तके, सज्ज्ञानं० ॥१५॥

न ज्ञानं विरहय्य शासनमिदं श्रौतं समुत्तिष्ठते,
तीर्थस्यापि जने प्रवृत्तिरनघा श्रौतप्रबोधोद्भवा ।
श्रौतं चेन्न प्रवर्तते न भवति तज्जैनं परं शासनं, सज्ज्ञानं० ॥१६॥

निश्शेषाण्यपि पञ्चधा प्रतिपदं ज्ञानानि गीतानि यत्,
तान्याराध्यपदानि दर्शनमुखान्यात्रिपदीबोद्धृतौ ।
तीर्थेशानि पदानि पञ्च सुधियामर्च्यानि तेभ्यो ननु, सज्ज्ञानं० ॥१७॥

ज्ञानं श्रौतमपोज्झ्य मूकसदृशान्यन्यानि चत्वार्यपि,
ज्ञानानीति यदीर्यते श्रुतधरैस्तत्रानुयोगादृतिः ।
स्वार्थाभासनरूपता नु निखिला भव्याब्जसूर्यप्रभा, सज्ज्ञानं० ॥१८॥

पूज्य निश्चले विशेषमतिना द्रव्य जिनाम्नातत ,
पश्चात्प्येत उच्चभावविषयाऽऽयन्ते पर स्वामिन ।
युक्ता दर्शनमुख्यगुह्यगुणयुग्–गुण्याश्रयाऽऽराधना, सज्ज्ञान० ॥१९॥

ज्ञान यद्यपि मोक्षसाधनतयोद्गीत श्रुतार्थाह्वैरं ,
सामान्येन तथापि न श्रुतमृते मोक्षप्रयाणोन्नतम् ।
यत्कर्मागमरोधनाशनिपुण सद्रूपस्थितौ साधन, सज्ज्ञान० ॥२०॥

कैवल्य विमल चरित्रममल पुर्योन्दृत भास्वर,
बुद्धिर्यद्यपि साधने सहचरी साध्या पर सा श्रुते सज्ज्ञान० ॥२१॥

यावत्तीर्थकरो वदेत् परिषदि प्राग्भारमर्थाश्रित,
ज्ञात्वा निर्मल–केवलेन यतिना यावच्छ्रुत तस्वत ।
यज्ज्ञात न निवेदित परिषदे तत्केवल केवल, सज्ज्ञान० ॥२२॥

मत्वा यान् विविधान् मनोगवसमान्वेत्तीह वोद्धा नरो,
नैवान् यस्तुमल वचो न गदित सर्व मवि केवला ।
मत्वा यच्छ्रुतमुन्यवे मतिर्धनैसल्पाभनापेक्षया, सज्ज्ञान० ॥२३॥

संस्कार मतिग तनोति सुतरा यत्सरस्ता स्यान्मति ,
श्रोतनान्वितमानसा नहि भवन्त्यल्पत्वभाजो मते ।
अक्षाणि तु भवे कृते प्राभत शब्दादयो बुद्धिगा , सज्ज्ञान० ॥२४॥

ज्ञातव्य विदित समात्मपरतयाऽऽदेय च शास्त्रात्तथा,
श्रुत्याऽधीयत सर्वमात्मपरग मोक्षान्तमापत्फलम् ।
येनेद जिनराजगम्यविगत ज्ञान सत्ता शर्मिन, सज्ज्ञान० ॥२५॥

येऽर्थाः सन्ति चराचरे जगति ये तद्वाचका निःस्वना,
नैवैते पतिताः कुतोऽपि वियदाद्याद्वक्तृवक्त्रोद्गताः।
ते सर्वे वरदृष्टिवादमपतन् तत्तद्धरः सर्ववित्, सज्ज्ञानं० ॥२६॥

दृष्टिश्चेन्न हि साम्यता हृद्गता नैवार्थबोधोऽमलः,
स्यादित्थं वरदृष्टिवादमननं सम्यग् दृशां सत्यभाक्।
अक्षातीतपदार्थबोधनपटुः सम्यग्-दृगाढ्यो ध्रुवं, सज्ज्ञानं० ॥२७॥

ज्ञानार्थे यदि ते मनो भवति चेदाराधनायोद्धुरं,
नित्यं तद्गुणगाहिनां गुणवतां भक्त्यादि कार्यं कुरु।
ध्यानं सत्पदजाप उन्नतिकरोऽभ्यासो नवीनश्रुतेः, सज्ज्ञानं० ॥२८॥

ज्ञानं ज्ञानवतां महाव्रतजुषां भक्त्यादिभिः प्राप्यते,
यन्नैपोऽस्ति गुणः परेभ्य उदितो यो दानदेये क्षमः,
पाठाद्या अपि संगता न मतये चेद् नैत आम्ना नयं सज्ज्ञानं० ॥२९॥

यस्यान्तः प्रकटाः समा नयभिदो वाचश्च नो विधृता-
स्त्यक्त्वा सद्विनयं सदा सविनया जीतेन यत्तद्वशाः।
कायः स्वप्नदशागतोऽपि विनयं नोज्झेत्सुगीतात्मनः, सज्ज्ञानं० ॥३०॥

नाप्तुं योग्यपदान्वितो नरपतिर्धिक्कारदूरीकृतो,
देवानां न करोति साधनयुतां भक्तिं परां यौगिकीम्।
चेत् तज्ज्ञानपदान्वितेपु गुरुपु त्रिधाश्रितो ज्ञानयुक्, स० ॥३१॥

नास्त्यन्योऽपर एतदृद्धिसदृशः प्राप्तर्धिकः सद्गुणो,
यः सङ्क्रामपदं भजेत् परजने मूलाद्भवेद्धाऽधिकः।
चेत्तादृग् गुणसङ्ग्रहो न रुचिदो गन्ता कथं सोऽव्ययं, स० ॥३२॥

धा। देवगतिं सदोदयवतीं नीचां गतिं नारकी-
मात्रित्य जनुमता श्रुतमॅर स्यात् त्ववध्यात्मकम् ।
व्यक्षान्तरनुश्रितो यदकृतिं सुस्थां च दुःस्थां धरेत्, स० ॥३३॥

जीवानामुपकारिणीमथ परां कुर्यात् क्रियां मज्जन,
सज्ज्ञानक्रिययाद्यथापि परतो जायेत पुण्यं तथा दुःकृतम् ।
येनै द्वे अपि मद्गतावितरयाऽऽश्रयरं तत्र ते, सज्ज्ञान० ॥३४॥

जीवानामपरापरासु गतिषु प्रोन्मज्जुमाशुभयो,
प्रोपद् यमुपर कृतादमितग सदा तनुनाऽन्यया ।
सद्वा भावि निनानताऽसुधरणं तान्गमेवेन्वेद्विदा, सज्ज्ञान० ॥३५॥

सुखं ज्ञानमगारसङ्गमदितं द्विधा चरेत्साधुराव,
निमलेनेवछविद् द्विधा गृहवसो गिमन्यिते द्वे सरेत् ।
सुखं नो जनिसम्भवं गुणगणोद्वद्धचेत्साध्यं मतं, सज्ज्ञान० ॥३६॥

सर्वान् द्रव्यसुमङ्गतान् प्रतिकस्थं सम्यक्स्वभावान् समे,
क्षेत्रे कालयुतान् स्थिरास्थिरमया वेत्त्यन्त्यबोधोत्तम ।
नित्यो नान्य परापृति स्खलति च शुद्धात्मरूप सदा, स० ॥३७॥

जैनोऽस्मी परमेष्ठिपञ्चकमनारूपूर्णाधिमयो,
नित्यं नौति च सद्वताद् गुणगणान् ज्ञानादिकान् भावयन् ।
पण्याराधनतत्परो विरमते तेनाम्बदीय स्मरन्,
सद्व्रतपूर्वमुपूर्वको न विरमेज्ज्ञानादिकाराधना ॥३८॥

इति चतुर्स्त्रिंशोऽध्याय ।

---

। पञ्चत्रिंशोऽध्यायः । ( सम्यक्त्वाधिकारः )

जैनोऽसौ मनुते सदा जिनपतेराज्ञां सुखानां खनि-
माज्ञाप्यन्त उदारकर्मनिधनाः स्वर्गाय मोक्षाय च ।
ज्ञात्वाऽनादिभवाटनं भवभृतां तच्छेदनाय स्वयं,
दध्याच्छुद्धतरं चरित्ररसणं दिष्टं जिनेन्द्रैः परम् ॥१॥

उन्मुक्तोऽत्र न चेदतीतदुरितो नाप्नोत्यभव्यः शिवं,
तत्पूर्व भवधारिणाघविलये सम्यक्त्वमादीयते ।
तत्र स्तो यतनावतां प्रशमिनां निर्वेदसंवेगकौ, दध्या० ॥२॥

मोक्षः सर्वमतेश्वरैरनुमतस्त्यागेन सर्वास्तिकैः,
कर्मांशापगमाज्जिने वरमते चारित्रयुक्तेरसौ ।
यत्रारुद्ध उदित्वरेऽघ उपयात्यन्तं पुरा सन्धितं, दध्या० ॥३॥

पापेभ्यो भयमादधन्त उदिताः सर्वे जगत्यास्तिकाः,
पापानां नहि कारणानि मनसा स्वैः स्वै रूपैर्जानते ।
अज्ञानाश्च दयामुखाः प्रतिपदं प्राणिव्रजान् घ्नन्त्यमी, दध्या० ॥४॥

पापं हेयतमं नृभिः प्रतिदिनं स्वीये सदस्यव्रजे,
व्याख्यान्तो न च तीर्थिकाः परिहृतौ तेषां समर्था यतः ।
जानन्ति न हि ते स्वरूपमथ चाङ्गं साधनाद्यं तथा, दध्या० ॥५॥

जीवानेव वदन्ति नो परमतान्यास्थाय धाष्टर्य परं,
पृथ्व्यादीन् प्रथितान् त्रसेतरविधान् पञ्च स्थिरान् (मौढ्यतः) ।
तन्वादि-प्रत्रिधानदक्षमतिकान् कायान् जगौ षड्मितान् , दध्या० ॥६॥

जन्माप्य तनुमधन सहकृत लब्ध्वा ममेऽमी भुवि,
व्याहार च सनातन प्रविदधत्यात्मीयजातिश्रितम् ।
सत्यप्येवमनात्मतत्त्वविदुरा नोशन्ति पृथ्व्यायसून्, दध्या० ॥७॥

आत्मान त्वमुपेत्य मुक्तिपदवी शश्वन्मता नैव च,
भव्यानामवसानिता न च जगत्पूर्ण मत शूकरै ।
यत्रास्तित्वमसुव्रजस्य सफले भोग क्रियाया निजे, दध्या० ॥८॥

सत्र प्राणभृत स्वकर्मफलिनो नैवान्यदत्त हृत,
भुञ्जन्ति प्रभुरीश्वरो न च फले धर्ता विनेता भवेत् ।
ससारोऽयमनादिको जनिमृतिव्रातो मतो यत्र तद्, दध्या० ॥९॥

चेत् कर्तारमुपैति विश्वजनक दारिद्र्यदौर्गत्यरुक्-
शोकोत्पत्तिभवानि तानि जनताद् ग्यान्युपैतीश्वरात् ।
सनिष्कारणवैरितामुपगतो यत्राश्रितो नेश्वरो, दध्या० ॥१०॥

सनपा जगतीतले दिनकरो ह्यित्वोपकारेतरौ,
निन्दास्तोत्रममानयन् जनव्रजे भास्य प्रभास्ते सदा ।
तद्वत्त्वन मतो जिनेन्द्र उदितादेयेतरार्थोदिति-दध्या० ॥११॥

दु खाकरिष्यति भवोदधिमज्जनेने-
ष्टो नार्चितो न जगता प्रभुरेप लोकान् ।
मीत्यैति नैव महनीयपदे मतोऽर्हन्, दध्या० ॥१२॥

स्वर्गापवर्गपदवीं-विनयामि तस्य,
त्यागो न मे चरणपङ्कजपट्पदाभ ।
चेत्यात्तथा प्रवितरामि मुदेति नाऽत्र, दध्या० ॥१३॥

आत्माऽनादिभवभ्रमिः स्वकृतभुक् चैतन्यपूर्णो भवेत्,
सम्यग्दर्शनबोधवृत्तसुगुणैश्चेदुद्यमी मोक्षणे, दध्या० ॥१४॥

यः संसारवनाम्बुदावलिसमाद्बन्धात्स्वयं निर्गतो,
लीनः संयमसाधनेऽघनिचयं क्षिप्त्वा धृतः केवलम्।
श्रीसङ्घाय समादिशन् मुनिगृहिश्रेयः सदाऽत्रार्हते; दध्या० ॥१५॥

संसाराम्बुधिमग्नचित्तचरितोऽर्थः प्राणिनाशाङ्कित-
स्तं हित्वा गुरुयोग्यतामधिगतः सोढोपसर्गान् क्षमी।
मान्यो यत्र गुरुः सदा शिवपथे पान्थीयति निःस्पृहो, दध्या० ॥१६॥

पूज्या यत्र जिनेशिनः शिवपथोद्देशात्स्वरूपस्थितेः,
सिद्धाः धर्मसमादरा गणिमुखाः सेव्याः सुपात्रस्थितेः।
सद्दृग्बोधचरित्रशुद्धतपसां सङ्घः सुधर्मास्पदे, दध्या० ॥१७॥

आत्मा ज्ञानसुखामितैर्गुणगणैः सिद्धौ युतः स्फातिभाक्,
तत्तद्रूपविभावनावनमुखो धर्मः स्वरूपे निजे।
तैलं स्यात्तिलसञ्चये न रजसि तन्नात्र धर्मोऽपरो, दध्या० ॥१८॥

पापालेः परिवारकं मतमिहोत्कृष्टं तथा वर्त्तनं,
दान्त्वाऽक्षादिगणं तपोऽनशनतो वैराग्यदं भावनम्।
नारम्भो न परिग्रहो न विषया धर्माय देहश्रितां, दध्या० ॥१९॥

लब्धेऽर्थे क्षयमाश्रितेऽघनिचये न्यायात् पथो लाभत-
स्तं पात्रावलिसङ्गतं हृदि सदा कर्तुं मनो धारणम्।
श्रेयो यत्र न लोभसञ्चयकरे लाभे न जातूच्यते, दध्या० ॥२०॥

कर्माण्यष्टविधानि बोधसुरसाग्न्यामिन्य मोक्षं गमी,
भव्यो धर्ममुपेत्य शाश्वतममु नोधात्स्वय वा गुरो ।
याऽन्यथा प्रतिमागता शिवश्रिता यत्राहृता सम्मता, दध्या० ॥२१॥

धर्मो यत्र निरोधवर्जनपरो जीवान्तकारिण्यपि,
सर्वेषा भविना सुखैकमननो दु खच्छिदु खापनुत् ।
रागद्वेषविवर्जितात्मनि गत मत्तरनवेसु सदा, दध्या० ॥२२॥

यत्राश्रिता गुरुपदे क्षितिसुरयकायान्,
जानन्त उत्तमधिया परिरक्षयन्त ।
चैत्याश्रयात्रितजनादिममत्वमुक्त, दध्या० ॥२३॥

यत्रास्ति मान्यमनघार्हतशास्त्रवाक्य,
पूर्वापरार्थविषमा नहि यत्र वाणी ।
सर्वाङ्गिजातहितकृत् परमार्थदेशि,
दध्यान्चरिनरमण जिनदर्शन स्वाक् ॥२४॥

यत्राऽस्ति कोऽपि जगता न वधादिपात्र,
शास्त्रा समस्तजनताऽघविनाशनाय ।
मोक्षाविरुद्धसरणिं प्रति सारयित्वा, दध्या० ॥२५॥

ज्ञान न यत्र विषयाभ्यसनैकरम्य,
नैनात्मवत्परिणत फलिताथशून्यम् ।
°स्त्र, दध्या० ॥२६॥

दुःखद्विषो जगति दीनदशामुपेता,
देवाङ्गनादिरसलालिततप्तदेहाः ।
नैवादृताःसुमहनीयपदं मुनीशाः, दृष्या० ॥२७॥

धर्म विदन् प्रविदधद् विरताघवृन्दो,
धर्म सदा प्रविदिशन् जिनराडुदीर्णम् ।
यत्रादृतो गुरुजनोऽनघमार्गगामी, दृष्या० ॥२८॥

प्राग्धर्मार्जितसत्पदोऽनवपथो रागादिसर्वारिहा,
स्याद्वादामृतवर्षको मुनिगणैराप्ताव्ययः शाश्वतः ।
अर्च्यः श्रीजिनराट् सदा सुरनरैर्देवो मतः सद्गुणैः, दृ० ॥२९॥

ये धर्मं परमं श्रिता जिनपदे विम्बानि तेषां सदा,
कुर्वन्त्यादरसंयुतानि विशदास्तत्स्थापनाढ्याः सदः ।
मोक्षाध्वप्रगुणोऽङ्गिवर्ग उदितो यत्रास्ति पुष्टौ धृतो, दृष्या० ॥३०॥

ब्राह्म्ये पञ्चनमस्कृतिः क्षण इहाद्ये संस्मृता पूजनं,
पुष्पाद्यैर्जिनराजबिम्बविषयं सत्संवरेणाञ्चितम् ।
धर्मस्य श्रवणं न रात्रिरसनं सुप्तिः कृताराधना, दृष्या० ॥३१॥

पूज्यो यो न रमां रसेत विषयैर्नास्त्राणि द्वेषावहान्,
नाज्ञानाज्जपमालिकां न च परे लीनो भवोत्तारके ।
पर्यङ्कासनदृग्यतोऽखिलभवान्तेऽसौ गतः स्वां विदं, दृष्या० ॥३२॥

पूज्यो यत्र गुरुर्निराश्रवतनुः सत्संयमे यो दृढः,
सोढा स्यादुपसर्गदुःखविततेर्निर्जित्य तृड्मुख्यगान् ।
सर्वानेव परीषहान्नघचयहासैकदृष्टिः सदा, दृष्या० ॥३३॥

धर्मो यत्र समस्तसत्त्वततये मा भीप्रद मिद्धये ,
षण्णा जीवनिकायरक्षणकरो युक्तश्च तस्मिन् सदा ।
आचारैरुपदेशनै फलभरत्वातैस्तदाचारिभि--र्दृश्या० ॥३४॥

नो यद्याचनमापगाचलिगत नागागवृक्षाश्रित,
तिर्यग्जातिगत न सस्रुतिगते देवे कचिन्नाश्रितम् ।
कैवल्यान्वितसद्व्रतिप्रजगत तत्साध्यते सनदा, दृश्या० ॥३५॥

तिष्ठेन्नत्र जन पुराकृतसुरुद्दुर्नीतिरीतिमहो,
मा यत्नायपथानुगोऽघनिचयोज्जासैकनद्यादर ।
एष्टव्य जिनमन्तनाथरहित ध्येया जिनो देवता, दृश्या० ॥३६॥

पर्वाण्युत्सयराजयोऽत्र वितता दाने व्रते सयुते,
भावेनोज्झितशाश्रवेन तपसि प्राणैकरर्थापरे ।
उत्तमन्तु जगता हिताय शमिना शुद्धोपदेशै सदा, दृश्या० ॥३७॥

यत्र स्मना पृथुगुणा मुनीना निवासा-
स्त्रीतियगादिवियुता रहिताश्च चिनै ।
सान्निध्यतोऽपि न परे श्रितमैथुनागा, दृश्या० ॥३८॥

यनेप्सितानि न विवाहयुगान्यलीका-
न्यादीयते तृणमपीह परै अदत्तम् ।
धाय तु ब्रह्म ननभेन्मुनारभार, दृश्या० ॥३९॥

यत्रास्ति नैव निशिभोजनमशतोऽपि,
वाल्यादपीह फलपञ्चकनजनेन ।
नानन्तकायनिचयोऽशनमेति जातु, दृश्या० ॥४०॥

चैत्ये यत्र विधीयते स्थितिपदं वामे स्त्रियां दक्षिणे,
पुंसां, नैव परस्परं स्पृशिविधिर्नो वेषवैयत्यतः ।
पुंसां नर्त्तनं नैव (नक्तं न) देवचरणं शुद्ध्यै निजात्मस्थिते-र्द्ध्या० ॥४१॥

मृत्युप्राप्तजनो हि यत्र निजतो न श्राद्धकामी स्वयं,
भोक्ता सञ्चितकर्मणो न विहितं प्राप्यं परैरर्पितम् ।
पार्थक्येन जगन्ति कर्म निजकं भोक्तार इत्युच्यते, द्ध्या० ॥४२॥

यत्र श्राद्धगृहेषु नाङ्गणगता कालाम्बुनाली भवे,
वर्चस्कस्य न कूपिका न च भवेत् स्थास्नुप्रपीडा गुरुः ।
न धर्माय नगादिसिञ्चनकृतिर्नैवानृताशीःप्रथा, द्ध्या० ॥४३॥

सेवालो नहि यत्र नैव च पयःपूरव्ययोऽनर्थको,
नो पण्ढादिविपोषणाय विहितिर्नो पञ्जरालिर्गृहे ।
न न्यायेन विनिर्गता चितिरपि प्रध्वस्तपुण्या कृति-र्द्ध्या० ॥४४॥

स्याद्यत्रास्तिकवेश्मसु प्रमितिमान् पानीययत्नो वृथा,
नो हिंसा वनतेजसामतिमिता चेष्टा भवेदङ्गिनाम् ।
त्राणायानुपदं स्थितेतरभिदां भीतिश्च पापाद्धतेः, द्ध्या० ॥४५॥

यत्राम्भोगलनानि धान्यतृणगोविट्काष्ठमुख्याश्रिता,
रक्षायै त्रसजीवसन्ततिश्रिते यत्नोऽन्वहं वीक्ष्यते ।
स्थाने स्थान उदीक्ष्यते मृदुगुणा सन्मार्जनीनां ततिः, द्ध्या० ॥४६॥

चुल्हादिप्रसिते तु देशदशके चन्द्रोदयैरङ्किते,
सत्सामायिकपौषधालययुते दानादिधर्मोद्धुरे ।
वासः स्याद् गृहमेधिनां जिनगुरुप्राप्तागमे सद्गृहे, द्ध्या० ॥४७॥

बाला अप्यनुवासर स्तुतिपदान्युद्घोषयन्ति स्फुट,
प्रस्फूर्जन्मुखपङ्कजाद्रु चिरतान्यर्हद्गुरूणा कृते ।
सर्वाभीप्रव्रताप्रता सुविनीता सद्वेषसुस्था सदा, दध्या० ॥४८॥

सच्छ्रद्धानलीरत्र चैत्यसुगुरुस्थानेषु नद्धादरा,
दाने पौषधकर्मणि प्रविसतौ सामायिकाना कृता ।
अर्हच्छासनमानिनाममितसुन्मान सदा कुर्वते, दध्या० ॥४९॥

ग्लानाना प्रतिचारणासु निरता सघे जना निर्भिय,
मत्वा ता प्रतिपातवर्जिततमा सद्धर्मसिद्ध्यै सुख ।
यत्रश्य त निचारचारुवनिताश्रेणिप्रभाशोभिता, दध्या० ॥५०॥

यत्रान्ते सकलाङ्गिभिरनियुतिर्मैत्री च सर्वासुमि-
र्मोद प्रष्ठगुणान्वितेषु सतत साद्र च हृद् दु खिषु ।
हेयादेयविनर्णितेषु सरलोपेक्षा पदार्थप्वल, दध्या० ॥५१॥

यत्र स्याद्गृहिणा सुतीर्थगमन सार्धं समैर्धार्मिकै,
पट्टीणा प्रतिपालनेन सुमहत्सद्धार्मिकोद्वत्सलात् ।
सन्वत् सत प्रतिधाममद्विधियुता पूजा सनात्सत्यका, दध्या० ॥५२॥

चैत्ये निम्ननिधौ निदर्शलिपिषु वाचयमे श्रावे,
प्राप्ताना विनियोजन वितनुते वित्तव्रजाना सुधी ।
यत्राप्तर्विहितो धृतौ मतिवर्रर्युक्त्यथमात्तव्रतौ, दध्या० ॥५३॥

य देशान्तरमाश्रिता प्रतिदिन चैत्यार्चनादौ रता,
श्राद्धान् यत्र प्रवन्दितानि कथया वन्दापयन्त्युन्मना ।
चैत्यानि प्रतिभासमानसुम्न सम्मीलने तं सता, दध्या० ॥५४॥

न्यायात्त्वत्र समर्जनं धनगतं शस्तं प्रयोगः पुनः,
सत्तीर्थेषु जिनेन्द्रबिम्बसहितेष्वाम्नायते मुक्तये ।
तस्योद्धारनवीनकार्यविषये ग्रामेऽपि चैत्यादिषु, दृष्या० ॥५५॥

स्याद्वादाम्बुधिसम्भवानि वचनान्यर्घापयन्त्यन्वहं,
रत्नान्युच्चदृशंपिषु प्रतिपदं यत्रार्हताः सम्मदात् ।
पर्यायैः परिमीलितानि भुवने द्रव्याणि षट् संश्रिता, दृष्या० ॥५६॥

जैनः स्याद्विमलेन दर्शनपदेनोढः परार्थं दृढ,
आत्मानं भववारिधेः परतटमानेतुमुच्चैर्मनाः ।
जन्माद्यैर्विविधैरशर्मनिधिभिर्जातां व्यथां व्यर्थयन्,
दृष्याच्छ्रेष्ठतमं चरित्ररमणं दृष्टं जिनेन्द्रैः परम् ॥५७॥

इति पञ्चत्रिंशोऽध्यायः ।

---

## । षट्त्रिंशोऽध्यायः । ( चारित्राधिकारः )

जैनोऽसौ ननु यो दधाति सदये मोक्षैकसौधारुहे-
ऽलम्भूष्णु प्रबलावृतिव्रजहतौ निष्णं चरित्रं परम् ।
सर्वेऽप्येतदवाप्य कर्मविलयं परमेश्वराश्चक्रिरे,
आत्मारामपदं भजन्तु भविनश्चारित्रमत्युज्वलम् ॥१॥

कायास्ते पृथिवीमुखाः षडपि नो घात्या मनोवाक्तनु-
सम्भूतैः करणादिभिस्त्रिकृतिभिरात्मोपमास्ते मताः ।
यावज्जीवमनाहतं व्रतमिदं यत्राश्रयेन्निर्ममं, आत्मा० ॥२॥

क्रोधाद्धुब्धतया हसेन भयतो नो यत्र वाक्य मषा,
स्याद्वान्य निखिलाघहेतुतुलित ससार उद्धामनम् ।
सर्वा पापपरिग्रहैकरुचिरा जायेत चेष्टा तत, आत्मा० ॥३॥

नादत्त तृणमात्रमथमपि चार्दीयेत्त यत्राच्छता,
दन्ताना प्रविधातुमात्मनिकरैंगदेयधार्येऽखिले ।
आत्मार्थान्तनिष्ठित मतमिह सेव्य प्रदत्त शिन, आत्मा० ॥४॥

यावज्जीवमनारत गुरुगुण धार्यं तु ब्रह्मान्वित,
सिद्धाभिनरभि सदा सुवृतिभिर्यज्जीवितास घते ।
सर्वासयमसाधन परिहरेत्त स्त्रीसङ्गमत्रोपित , आत्मा० ॥५॥

यस्मिन् जगतीतले त्रिदधीतासङ्गत्वभाव त्यन-
नि शेषार्थपरिग्रह स्थित इह कर्माणुमीतो मुनि ।
धर्मायापि धरेद्रजोहरणदग् नि सङ्ग उक्तोपधि, आत्मा० ॥६॥

स्वाध्यायान्निविघातक धृतगुरुप्रज्ञाऽटन शारीर,
जग्धि चाशनपानराग्नसहिते स्वाद्ये निशाया त्यजेत् ।
रक्षेदात्मनि यत्र सत्त्वविषया स्फुजत्सुधी सदया, आत्मा० ॥७॥

क्रोध लोभमदान्वित च निकृतिं जह्यात् स्थित सद्गिरि,
शौचे सयमसयुते सुतपसि ब्रह्मण्यसङ्गे रत ।
पापद्य वशधोन्ति धृतव्रतो धर्मं तु यत्राश्रयेद्, आत्मा० ॥८॥

पृथ्व्याद्यिश्रितपञ्चक त्रिकमपूर्णाक्षाश्रित पूर्णक,
जीवानां गतचेतनांश्च यतते प्रेक्षा समुत्प्रेक्षिताम् ।
त्याग पापहर्ति समीक्ष्य तनुराग्चित्ते सदाऽत्रोयमार, आ० ॥९॥

सूरौ वाचक सत्तपोऽसहशिशुव्राते कुले सद्गणे,
सङ्घे साधुमनोज्ञयोरुरु सदाऽऽधीयेत वैयावृतिम् ।
यत्रत्यैः प्रतिपातवर्जिततनुं स्वात्मश्रियः कामुकैः, आत्मा० ॥१०॥

योषाणां निलये न वासमुचितां वार्तां करोतीह यः,
सेवेतासनमिन्द्रियाणि दमयेत् कुड्यान्तरो न भवेत् ।
क्रीडां न स्मरतीद्धमुज्झति रसं शोभां न काये सृजेत, ॥११॥

यावज्जीवमविश्रमं दधदिह ज्ञानादिरत्नत्रयं,
द्वौ भेदौ तपसः स्वषट्कसहितौ क्रोधादिवृन्दोज्झनम् ।
सप्तत्याढ्यमिदं हि चारुचरणं यत्राप्यते सर्वत, आत्मा० ॥१२॥

आहारे वसतौ पतद्ग्रहधृतौ वस्त्रे च शुद्ध्यर्थिता-
मीर्याद्याः समितीश्च पञ्च दशयुक् ते भावने द्वे कृतौ ।
भिक्षूणां प्रतिमाः सदेन्द्रियजयं वस्त्राद्यवेक्षां गुपीः, आत्मा० ॥१३॥

आबाल्यादपि दीक्षणं भवभिदे कर्मानलाम्भूपमं,
यावद्दीक्षणकार्ययोग्यमसमं सामर्थ्यमिष्टं तनौ ।
वर्णानां न भिदा न चाश्रमक्रमोऽन्येष्टोऽत्रधर्मेशिवे, आत्मा० ॥१४॥

नैवाऽत्र क्षितिकर्षणं पशुगणो नैवात्र पाल्यो मतो,
व्यापारोऽपि समग्रपापनिलयस्त्याज्यो मतः सर्वथा ।
आरम्भात् सपरिग्रहाद्विरमणं त्रैधं त्रिधाऽत्रार्हते, आत्मा० ॥१५॥

यावत्स्थाम शरीरजं मतिमुखान् शक्तो गुणानेधितुं,
निःसङ्गोऽत्र भुवस्तले नवविधं कल्पं समाराधयन् ।
धर्मोद्योतपरोऽघसन्ततिभिदे कुर्याद्विहारं मुनिः, आत्मा० ॥१६॥

यत्राऽऽद्यारस्त्यति समुज्झितपदा चक्षुर्युगेऽपण–
यत्रावास उदीरितो मुनिगणान् रक्षाक्षमो ब्रह्मण ।
नासौ जीर्णमनूतन न च परैरन्यैं वसीतान्वह  आत्मा० ॥१७॥

षण्णा जीवनिकायगानवर्त्यसुमता ज्ञाता स्वरूप वध,
त्रेध त्रेधमुदारधी परिहरेत्तेषा तथोपस्थिते ।
स्याद्योग्योऽत्र मुनीश्वरोऽर्हज्जिनपे तीर्थे तथाऽऽरम्भते, आ० ॥१८॥

पर्यायेण श्रुत समाहितधिया स्यात् सूत्रलार्था मुनि–
श्छेदाता तु यदा भवेत् परिणतो योग्य श्रुताना मत ।
आचारस्य प्रकल्पने क्षम इह स्याद्धमदेशी मुनि , आत्मा० ॥१९॥

उत्सर्गैरपवादनैश्च विविधैर्युक्ते श्रुते सार्थके,
योऽधीती स गीतार्थतामधिसरेद्योग्यो मुनीन्द्रे पदे ।
मद्योऽन्येनमधिश्रयेच्छुतनिधी मोक्षकतानोऽत्र प्राक्, आ० ॥२०॥

गार्हस्थ्येऽप्यनुवास वेषमसहृत्साधुभावे त्यजेद्,
ज्ञातेयांश्च विचित्रसङ्गसहितान् द्रव्यस्य सर्वं घनम् ।
निस्सङ्ग प्रतिबन्धवर्जितमना देशेषु यत्राटति,  आत्मा० ॥२१॥

यत्रस्य प्रतिपादयेज्जनगणान् धर्मं विना निश्रितिं,
तुच्छाना प्रतिपूर्णैर्भयत्ता हिंसादिपापोज्झनान् ।
ज्ञानादि सहित सुदर्शनमतियुक् सद्व्रत स्थापयन्, आत्मा० ॥२२॥

यत्राऽऽख्याति जन सुधममनिश पर्ता प्रकल्प्यस्य य ,
स्थानु सयममार्ग आगमरुचि सत्त्वोद्धृती सोद्यम ।
स्याद्योग्योऽयमनुप्रदम तु परस्वाम्यायको नत्तरु , आत्मा० ॥२३॥

देवं मोहमहाभटोज्झितिपरं सर्वज्ञसर्वेक्षिणं,
शक्राद्यैः सुरसार्थपैर्नियमतोऽर्च्यं पादयुग्मं सदा ।
यस्याशेषपदार्थदृग्वच इह ख्याति स्थितोऽत्रोद्यत, आत्मा० ॥२४॥

सर्वारम्भपरिग्रहाद्विरतदृक् शास्त्रार्थपाठे रतो,
लीनः संयमसाधने परतपा मोक्षार्थचेष्टापरः ।
यो भवतीह मुधैकजीवनपरः सोढोपसर्गावलेः
(तं ख्याति धर्मे स्थितः) आत्मा० ॥२५॥

सम्यग्दर्शनबोधवृत्तकरणैर्मुक्ति वदन्नत्र स-
न्नामादिन्यसनानि नीतिमितिभिर्गम्यानि तत्त्वानि च ।
निर्देशादि-सदादिभिश्च मीलितै रोधाय कर्मावलेः, आत्मा० ॥२६॥

एकाक्षादिक्रमान्मता मतिभिदाः श्रौतस्य सार्वोक्तितः,
स्थानान्तर्यमुखाश्रिता भिदवधौः ज्ञेयात् पुनर्मानसे ।
सर्व द्रव्यमुखं तु बोधति विदान्त्ये ख्याति यत्संश्रित, आ० ॥२७॥

स्यादात्माश्रितभावपञ्चकमिह जीवावृतीनां क्षया-
च्छान्तेर्मिश्रणतो द्वयोरुदयतोऽनादेर्भवाशामनात् ।
ख्येयं कायविधानसंयुतमिदं सोपक्रमं जीवितं, आत्मा० ॥२८॥

यद्दानाद्भवतीह कर्मफलतो वेद्यं भवेत्कोदिशः,
कायो जीवितमीदृशोऽनुभवतां श्वभ्रेषु देवेषु च ।
अत्राख्याति चतुष्टयं गतिभृतां निर्विण्णतालब्धये, आत्मा० ॥२९॥

संयोगोऽसुमतां मिथोऽणुचिततेर्लोकप्रमाणात्तकद्,
धर्माधर्मनभोऽन्वितात् परिमितिभाजोऽणवो नासवः ।
कालोऽनन्त इतीह षट्कमुदितं द्रव्यस्य याथार्थ्यतः, आत्मा० ॥३०॥

जीवे कर्म लगेत् यदाश्रवततेरात्त स चाक्षान्नतै-,
र्युक्तैर्योगकपायनैर्निनिघतो यत्कर्म वेद्य भवे ।
मिथ्यात्वेन कपाययोगसहितेनात्मलग्न मत, आत्मा० ॥३८॥

हिंसाद्या श्रुतवेदिना प्रतिपद वर्ज्या प्रतिज्ञाविधे,
शेषाणि त्रिदशामुतोऽपनिचयाद्यद्वा ततोऽमी तत ।
सद्व्रत समितादिभूरिगुणिनोऽत्रोक्ता तप साधना, आत्मा० ॥३ ॥

ससारोऽयमनादिकोऽन्तकजराकीर्णोऽसुराना खनि-
स्त्र्छेदो मतिमद्भिराप्तुममज्ञानाद्पूर्ण शिवम् ।
लोकाग्राश्रितजन्तुषु स्थितिवर स्यातीति यत्राश्रित, आ० ॥३३॥

देय दानमपापकेऽघरहित धर्माधर्मे सत्सखा,
दु खिप्राणसुतोषक गतभय धृत्वा दया हृद्गताम् ।
जीवाद्यर्थनिबोधन च भविना ज्ञानेऽत्र दान मत, आत्मा० ॥३४॥

क्रोधो हेय उपेत्य तापप्रतिपु णो मानोऽन्तघ्न् सज्जते,
विश्रम्भैकविघातिनीं परिहरेन् माया पर स्त्रीविद ।
लोभ सर्वविनाशपाटवधर जह्यादिति ग्यायते (ह्योक्त सत्य), आ०

पूर्वं यत् सुकृत चित नरभवाप्त्याप्तिस्तत सङ्गता,
ज्ञात्वा दु खफल न किं सफलयेत सद्दर्शनाद्यान्ते ।
दौर्लभ्य पुनरस्य बोधिसम बुद्ध्‌नोऽगतत्वेह यातु, आत्मा ॥३६॥

नित्योऽय परिणामवान् वितनुते सङ्ग वियोग सदा,
कर्मालेर्हननादितोऽप्रियभुचोऽन्यस्या विरक्तेस्तत ।
सिद्ध्यै सन्ति सुदर्शनादिकगुणा मत्वेति सिद्धान् स्मरे, आ०

कर्मालिप्रभवो भवो न विहितो दुःखैकरूपा विभुः,
कर्त्ता नाऽस्य न चापि दुःखसुखयोः स्यातां तु कर्माश्रिते।
ते प्रत्येकमिहाङ्गिषु प्रयततामित्याह यत्संश्रितः, आत्मा० ॥३८॥

हेयादेयतया भिदाऽर्थनिचये ज्ञानोत्क्रमात् प्राणिनां,
पाट्याऽजीवततेः सदोपकृतिषु पुण्ये च पापे क्रमो।
कर्मानुक्रमगो गुणेषु विलयात् पाट्याश्रवे सम्मता,
प्राग्यत्वेन च संवृतौ बहुगुणोद्दीप्तिक्रमो निर्जरे।
बन्धे छेदक्रमो मतोऽचलपदारोहस्य श्रित्वा गुणान्,
मोक्षे धीपदगः क्रमो नवभिदि प्रोत्साहिकास्तद्भिदः।
तत्त्वानां मतमाश्रयद्भिर्जिनपस्योच्यन्त आप्तुं शिवं, ॥३९॥४०॥

यामेऽन्त्ये निश उच्यतेऽत्र विलयः सुप्त्याः स्मृतेरर्हतां,
स्वाध्यायं चरमांश आवसनतामर्कोदये लेखनाम्।
पादोने प्रहरे तु भाण्डलिखनं सूत्रार्थपाठो द्वयो,
भिक्षा बाह्यगतिद्वयं तु तृतीये लेखां सशय्यांशुके।
पात्रेऽन्त्ये प्रहरे तु दैनिकगतां कुर्यात् षडावश्यकीं,
व्युत्सृज्याखिलपापसन्ततिमथ स्वध्याद् द्वयोर्यामयोः।
शेषे धर्मसिते तु मोक्षगमके ध्याने च काले हृदि, ॥४१॥४२॥

यत्रोज्झितानि मुनिभिः सकलानि कर्मा-
ण्याप्तं पदं त्वविकलं परमात्मरूपम्।
तान्येव वन्दितुमनाश्चरतीह साधुः,
श्रेष्ठं तदेव चरणं भविकाः श्रयध्वे ॥४३॥

तीर्थं सिद्धगिरिं स रैवतमथो सम्मेतमष्टापदं,
चम्पा पुरीमपापिका गिरिमथो वैभारमप्यनुत्तम् ।
तारङ्ग निविधातिशायि जिनपोपेतानि सेवेऽत्र स्राक्, आ० ॥४४॥

मोक्षस्याप्तिरुदाररूपधरणे सद्दर्शनाश्रिये,
तद्धेतु प्रतिबन्धकार्यमननं ज्ञानात्सुधामोदरात् ।
चारित्रं त्विह कर्मबन्धविलये नत्याग्रहेणान्विते, आत्मा० ॥४५॥

ये ये बन्धनहेतवो भवभृता कायान्तिप्रायिका-
स्तांस्तान् व्युत्सृजतीह प्रेत्यगमने स्यादन्यथा बन्धनम् ।
प्रेत्यापीति विवेकरत्नमसम ध्यायेत्सुधीरत्रग , आत्मा० ॥४६॥

प्राणान्तेऽप्यनघा दधीत मुनिराट् सलेखनासंयुतां,
देवादीन् प्रतिभून् विधाय सहने स्थिर समाराधनाम् ।
ज्ञानाग्निर्विकगोचरा विधिपरं शल्यानि हत्वा सुधी
( ऽत्र बुध् ) आत्मा० ॥४७॥

आम्नात फलमत्र धर्मकरणे स्वर्गापवर्गद्वयं,
गर्ताशूकरसम्मिता अपि जडोद्भूते सुखे सान्द्रा ।
गौणीकृत्य ततोऽस्मिन् परफलं वाञ्छेत् सदाऽत्रोत्तम , आ० ॥४८॥

देवे धर्मयुते गुरौ च न यथा रागोऽघबन्धक्षम ,
सम्यक्त्वाग्निगुणानलैर्विमलताऽस्मादेय वस्तुस्थिते ।
सद्धर्मोपदेऽभिलाष उन्नतो वैराग्यसद्द्वन्द्वर , आत्मा० ॥४९॥

अज्यन्ते सुधियाऽत्र ये परिकरा अर्थान्यो यत्नत-
स्तेऽनघ्य मरणान्तमाप्य नियुञ्जि गन्तार आप्या न ते ।
कर्मक्लेशवियोगतो निजगुणा आप्ता शिवे स्थायिन , आ० ॥५०॥

नष्टो नैव समुन्मिलत्यपि परो वाह्योऽर्थं आत्मार्जितो,
नष्टोप्येति पुनस्त्वपार्धभवतोऽवश्यं दृगादिर्गुणः ।
काष्ठां चैष हि याति शुद्धिपरमां तत्तत्र कार्या स्थितिः, आ० ॥५१॥

ज्ञानादित्रितयं मतं नियमतो यद्भावलिङ्गं मुने-
र्द्रव्येणापि रजोहरं मुखपटीपात्रं सचोलांशुकम् ।
लिङ्गं स्वान्यदुरापधर्मजननं धार्यं सदाऽत्रोदितं, आत्मा० ॥५२॥

चारित्रस्य भवन्ति जन्मनि परोलक्षाः समाकृष्टयो,
वेषेणास्य चरित्रचारुमतिता तावत्प्रमाणा भवेत् ।
वेषेणैव वन्द्यतामनुगतश्चक्रीह शक्रादिभिः, आत्मा० ॥५३॥

उत्सर्गेण हि कोऽपि न प्रतिकृति कुर्याद्ददानां मुनि-
श्चेन्नो तिष्ठति धर्मशुक्लमननं कुर्याद् द्वितीये पदे ।
शोधिर्दोषततेः पुनर्न गुहिता ध्यानं शुभं चोद्भवेत्, आत्मा० ॥५४॥

अश्वे हस्तिनि गोव्रजे जनगणो भूपार्थमाभूषणा-
न्यारोहेन्न च तत्र ममता काचित् पशूनां भवेत् ।
तद्वत्संयमसाधनाय यतिनां मुक्तोपधौ मुक्तता, आत्मा० ॥५५॥

यावल्लाभमधारयन्नृपवरः स्तेनं महालोप्त्रिणं,
सन्मानेन ददन्तमर्थमतुलं छेदेऽस्य शूलीकृतः ।
तद्वज्ज्ञानगुणादिलाभमनुयन् धर्ता परस्योत्तमः, आत्मा० ॥५६॥

चारित्रं न परत्र गच्छति समं जीवेन बोधादिव-
द्वज्रादेरिव वालकाल उदियात्संस्कार एतद्भवः ।
अत्रैतद्व्रतचेतसां न च पुनः प्राक् तद्व्रजेत्पाल्यतां, आत्मा० ॥५७॥

देशा दीर्घपथा भवन्ति चरणादेशव्रताना भवान्,
तत्राचुरमयम्य तम्य निपुण नदी च ससारिता ।
जन्तोर्भाव्यनुग प्रयत्ननिकर साम्य तु प्राप्यन्ति, ॥५८॥

समारे तृणसाधिते मुनिवर कल्याणकोटीं श्रयेद्
या ता नैव सुरेन्द्रसार्थनिचयो गच्छेज्जिपण्णोऽनघे ।
ज्योतिर्नैव तथा रवेरिव परे ज्योतिर्धराणा भवे, आत्मा० ॥५९॥

राधावेधसम मुनेभव इह स्यादन्तिमाराधन,
प्राचुर्य यतिना तु वेद्यवसर शुश्रूषका सादर ।
॰ स्यात्तत् त्रयमन्तरा मतिमता योग्य मदहगमाद्, आ० ॥६०॥

आयुस्तस्य विभाव्य नाशमखिल कुर्वीत समाराधन,
सूरीन्द्रान् प्रणिपत्य सर्वनियमानादत्त उद्धारवान् ।
साक्षीकृत्य जिनादीकान् पुनरपि प्रोत्साहयेत् सद्व्रते, आ० ॥६१॥

गच्छस्थान् सपक्षान् समेत मणिशून् आदृत्तसार्धं त्रिधा,
जात यज्जनुपाऽऽगमवचोऽनाप्त चीर्णं तक्त् ।
आचार्योचितयाचकान् समनृपान् शिष्यादिकान् सन्मना, ॥६२॥

जैनेऽत्राखिलसङ्घा च्छुल्गााऽऽयालत्रान् मुनी-
ना जन्मायधि यत्कृत ततुवर्षाक्षिसैरनिष्ट पृथे ।
भाम्येऽस्य भवान्तरे पृथमतो न स्यात् पुनर्दुर्लभ, आत्मा० ॥६३॥

जीवा ये भवनाल्पमल्पमनस्ता मद्भास्तामोक्षिता-
मार् क्षाम्येन स्पृहयेत यस दुरित यच्चीपुराभिव माम् ।
आग्न्या न भवे मवत परिगता वैरस्य मुक्तिरगा (त), आ० ॥६४॥

जीवानां भवतीह पूर्वभवगो द्वेषोऽपि रागोऽपि च,
प्रत्यक्षं तु विना स्मृति गतभवद्वेषादिहेतूद्भवाम् ।
तद्वद्वैरपरम्परां विबुध्य मतिमान् सर्वेषु कुर्यात् क्षमां, आ० ॥६५॥

नीतो देवेन युग्मी सुरभवनसमात् क्षेत्रता वैरहेतोः,
श्वभ्राप्तेर्योग्यमायुस्तनुसुखलघुतां प्राप्य धामेति मत्वा ।
स्थाप्यं केनापि नेदं मनुत इह भवी क्षामणं तद्विधत्ते, आ० ॥६६॥

लब्धेऽपि प्रभुताधरे जिनपतेर्जन्मन्यशेषाङ्गिनां,
मुक्त्यर्थं न तु वैरमाप चलन दैत्यस्य गोपस्य च ।
पार्श्वस्यान्त्यजिनेश्वरस्य मतिमान् ज्ञात्वेति वैरं त्यजे–दात्मा० ॥६७॥

पापानां परिहारमेव कुरुतां सर्व जगन्मा च भू–
दुःखानां भवनं पदं तु लभतां नित्यं महानन्ददम् ।
युज्येतेद्दशचिन्तया न विदुषां वैरं ततस्तत्त्यजे– दात्मा० ॥६८॥

सर्वाङ्गिष्वविशेषतः सुखमतिश्चेद्धारणीयाऽन्वहं,
पीयूषोपमिता तदा कथममी वैरस्य पात्रं विदाम् ।
सञ्चिन्त्येति विषोपमामरिमतिं जह्यात् समेष्वङ्गिषु, आत्मा० ॥६९॥

यत्रेक्षेत गुणांशमात्महितदं नम्रो भवेत्तत्र ना–
तच्चेन्मोदपदं सुधी हितकरं द्वेषेण किं दह्यते ।
मत्वेतीह सदा भवेद्गुणपदे वैरस्य नाशो यतः, आत्मा० ॥७०॥

जीवाः सर्वभिदान्विता निजनिजाऽदृष्टेरिताः संसृतौ,
चित्रां योगसमुद्भवां विरचयन्त्यात्माश्रितां चेष्टिताम् ।
केषाञ्चिद्भवितव्यता न सुभगा किं तत्र वैरेण भोः, आत्मा० ॥७१॥

प्रत्याख्या त्रिविधा त्वामिहननादीनां पदानां च स,
नीता येऽत्र जनौ पुरा भगवतेनाज्ञाननिशाभृता।
त्रेध त्रेधममुष्य पापसदनस्याऽस्तु व्ययो दुष्कृते, आत्मा० ॥७२॥

लोभाद्धास्ययुताद्भयाच्च यदवग् मिथ्या क्रुधा सयुत-
स्तन्मे सन्नभयोदधिं परिगतो भूयाद्वृथा दुष्कृतम्।
द्रव्येणेदमलोकलोकविषय कालाख्यभवेषु च, आत्मा० ॥७३॥

ग्राह्य धार्यमदत्तमात्तममतिं श्रित्वा मया यद्भवेत्,
तत्सर्वं विन्धामि दुष्कृतपद मिथ्या शुभेनात्मना।
प्राणा यत् रहिरर्थजातमसुपु प्राणप्रदोऽर्थप्रद, आत्मा० ॥७४॥

तैरश्च सुरज च मर्त्यजनुषो यत्सम्भवेन्मैथुन,
यत्तत्साधितमर्हिपत्तात्ममतिना कामान्धताधारिणा।
तत्सर्वं परिहाय्यतापदमद आत्माथत प्रापये- त्मा० ॥७५॥

दुःखाना खनिरेष यो बहुविध सङ्गो धनादिग्रहे,
नातोऽन्यज्जगतीह जन्तुविषय दृश्येत सद्न्भयम्।
तत्सर्वं परित्यज्यतापदमयेत् सङ्गो कृपाङ्कश्रिता, आत्मा० ॥७६॥

ससारस्य मतो महान् परिकर क्रोधो यतस्तद्वशा-
ज्जन्तुर्नैव हिताहित विमनुते दग्ध क्रुदग्नि श्रित।
जीवे तापकर त्यजामि तमहं श्रित्वा सदाराधनां, आत्मा० ॥७७॥

वर्गस्य त्रितयस्य यः प्रतिपदं घातं विधत्ते मद,
आचार्यादिगतं भनक्ति विनयं बालान् समुत्साहयन् ।
तं सर्वं विनयासि सत्पथगतः शृङ्गाष्टकैः सन्नत, आत्मा० ॥७८॥

माया नागीव नित्यं परदररमणा जीवितान्तं करोति,
चारित्रं पालयन्तो मुनिवरवृषभा भ्रंशमायान्त्यमुष्याः ।
मल्ल्याद्यास्तत्त्यजेन् तां मुनिवृषभ इतो मार्गमार्यैशदव्यं, ॥७९॥

लोभः सर्वगुणोज्झितः स्थितपदं यो याति सूक्ष्माश्रितं,
यावत्सद्गुणधारणं मतिमतां दुश्छेदभूमिं गतः ।
तं सर्वं परिहृत्य संयमवतां मार्गेऽधुना संस्थित., आत्मा० ॥८०॥

रागः प्राणभृतां स्वल्परमणप्राणापहारे पटु-
र्यद्दष्टो गणयेद् विपर्ययमतिर्बाह्यं पदार्थं निजम् ।
मायां लोभयुतां विशेच्च तनुमाँस्त्यागस्य धामैप तद्,. आ० ॥८१॥

इष्टं हन्तुमुपस्थितं स्वहृदये दृष्ट्वा समुद्भावयेत्,
प्राणी द्वेषमनाहतः स्वरमणे वैरानुबन्धप्रदम् ।
रूप क्रोधमदात्मकं प्रकटयन्त्यन्तस्ततस्त्यज्यतां, आत्मा० ॥८२॥

रागद्वेषवशाकुलाः प्रतिकलं मज्जन्ति बोधादिकं,
हित्वा साध्यमनर्थकारिकलहे सर्वस्वनाशे रताः ।
तन्नैकक्षणमस्य दातुमुचितः स्वस्मिन् प्रवेशो बुधैः, आत्मा० ॥८३॥

रागाद्याक्तमनाः सदा प्रयतते श्रेष्ठे मते सद्गुणैः,
सत्यान्यैः परिपातितु गुणपदाद् दोषैर्जनानां पुरः ।
अभ्याख्यानमुदीरयेत् कटुफलं तत्सर्वदाऽदस्त्यजेत्, आत्मा० ॥८४॥

य शक्तो न हि शुद्धमार्गगमनेऽन्यान् पातयालुस्तत ,
प्रीतिं सन्नरगोचरा विलयति प्रोन्यानृत यद्वचम् ।
सर्पैशून्यमिद सतामघपद त्याज्य सदात्मैषिणा, आत्मा० ॥८५॥

रूप गोकयुत समैति कुमतिरयेषु जीवेतरे-
प्वज्ञानान्धतया स्वरूपरमण निस्मृत्य भोगानुग ।
कर्मानुक्षणमेष आत्मनियत पश्येत्तदेतो त्यजे- , दात्मा० ॥८६॥

धर्माय न यतेत यो निजगुणभ्रशात् परास्यैकद्दक् ,
सोऽन्येषा वदतीह दूषणपदं सत्य तथा वाऽन्यथा ।
तद्वर्ज्यं परिवान्न परगत मद्भि सदा निन्दित, आत्मा० ॥८७॥

प्रायेणोन्यत आन्तरेग नितथ मुग्धान् परान् नञ्चितु
तत्सत्याभमुदीरयन्ति मनुजा माया प्रयुज्याग्रत ।
निश्वस्ताङ्गिविनाशने पटुतर मायामृषा तत्त्यजे- दात्मा० ॥८८॥

श्रद्धत्ते ननु पापधामनितर्तिं हेयान्च सच्चेतसा,
य स्यादूर्जितमानसो जिनवच पीयूषपाने रत ।
मिथ्याशल्यविनाशकृत्तस्तत इद व्युत्सजनीय बुधै , आत्मा० ॥८९॥

पापस्थानविरक्तचित्तरतिको भूयान्क्रियाश्रितो,
हृत्वा दुर्गतिकारणानि मतिमान् सद्ध्यानसिद्धि श्रयेत् ।
रक्तोऽनादिभवेषु तत्र न हि तत्त्याग विना श्रयसी, आत्मा० ॥९०॥

यत्राऽऽत्मा नितरामुपैति मनन न ह्यस्ति मे किञ्चन,
नैरात्म्य जनस्य सयुतिकरोऽह किन्तु भिन्न स्वयम् ।
आ मान निजमेकमेव मनुते शश्वच्चिदानन्दिन, आत्मा० ॥९१॥

संसारे भ्रमता कृता बहुविधाः संयोगसार्थाः परं,
प्राप्ता दुःखपरम्परा प्रतिभवं जीवेन कर्मार्जनात्।
ज्ञानाढ्यं निजमेक्ष्य जीवमधुना सर्वां त्यजामि त्रिधा, आ० ॥९२॥

संयुक्तं भववारिधावसुमतां जातं न कैर्वस्तुभि-
स्तत्सर्वं स्थितमेवमेव न पदं जीवानुगं प्रेत्य हा!।
तन्मे शाश्वतरूपमेक्ष्य रुचितं ज्ञानादिरूपं शुभ- मात्मा० ॥९३॥

ये केचिन्निजकर्मपाशपतिता भ्राम्यन्ति लोकेऽसव-
स्ते सर्वे क्षमयन्तु मेऽमतिकृतं निःशेषमागःपथि।
स्थित्वाऽहं क्षमयामि वैरमधुना त्रिध्यं त्रिधा यत्रगः, आ० ॥९४॥

प्राग्जन्मार्जितपुण्यभारसहितं भुञ्जन् जिनाह्वं त्वयं,
गर्भे जन्मनि दीक्षणेऽन्त्यविदि च प्राप्तौ शिवस्याखिले।
विश्वे सातमुदीरयन् शिवपथोद्देश्यत्र मेऽस्तु प्रभुः, आत्मा० ॥९५॥

यैरष्टादशदोषसन्ततिरलं प्रोद्वेष्टिताऽऽत्माश्रयात्,
प्राप्तं केवलमुज्ज्वलं सुरपतिव्रातेन पूज्याः सदा।
मोक्षान्ता कथितार्थशुद्धविभूतिः सङ्घाय तैर्नाथता, आ० ॥९६॥

कृत्वाऽनादित आत्मनि श्रितमिह कर्मेन्धनं भस्मसा-
दासाद्याव्ययबोधसौख्यबलदां शक्तिं स्वरूपात्मिकाम्।
सिद्धास्ते जगदुत्तमाः शरणदा माङ्गल्यकाराः सदा, आत्मा० ॥९७॥

सोपाध्यायमुनीश्वरा गणिवरा मोक्षार्थमाप्तुं यताः,
साहाय्यं भविवित्त (चीर्ण) धर्मविधिषु प्रत्यक्षमाबिभ्रते।
श्रेष्ठत्वं शरणं च मङ्गलविधिं चार्हन्ति तेभ्यो नमः, आत्मा० ॥९८॥

धर्मो यो जिनदेशितोऽन्ययपन्नेतु जनान् य क्षमो,
यश्चामीकरवत् कपेण सहितश्छित्तापयुक्त पुन ।
जन्तूना हितदेशको भवतु सोऽत्तसोऽनो मङ्गल- मात्मा० ॥९९॥

धन्योऽह भवनार्थियानतुलित लब्ध मया शासन,
जैन स्यात्पन्सयुता गिरमुशत् सर्वासुमत्सारकम् ।
निष्पक्ष समनीतिरावकलित यत्रास्थया स्याच्छिव- मात्मा० ॥१००॥

धन्यास्ते मुनय समेत्य जिनपस्येन वर शासन,
प्राणान्तोपनिपातनेऽपि न जहु श्रेणेरुपद्राविणाम् ।
मुक्ता कर्मविनाशनात् प्रकटिताऽतुल्येन वीयण ये, आ० ॥१०१॥

शीर्षे रात्रिरथह्निदाहमसहन् श्रीनेमिशिष्यो गतो,
बालोऽनालपराक्रम श्वशुरत प्रेतालये सस्थित ।
निर्वाण जिनराजसाधितमगात् क्रोधाग्निदाम्बुद, आ० ॥१०२॥

धन्यास्ते मुनयो नमामि चरणाम्भोजेषु तेषा सदै-
कोना पञ्चशती मुयन्त्रपीडिता ये सिद्धिमापु स्थिरा ।
सत्य ये विविदुर्भिदामतिशयादात्माऽङ्गयोराऽऽशिव-मात्मा ॥१०३॥

धन्यो येन समाहितात्मविधिना कृत्वा क्षय घातिना,
लब्धा येनल्सविदादिविभूर्ति हत्वा समुद्घातत ।
श्रणेश्वेतरदुष्कृतावलिमिता सिद्धि शिवा शाश्वती, आ० ॥१०४॥

अन्त्ये योगनिरोधमाप्य विजहुर्य बन्धन कर्मण,
श्रेण्या प्राप्तचित स्वकर्म निचय देहु सितध्यानत ।
मुक्त्यौदारिकमुख्यकायत्रितयीं सङ्घातहीना गता, आ० ॥१०५॥

गच्छन्तः शिवमार्गमेत ह्यचिताकाशप्रदेशान् विना,
नान्याकाशगदेशसंश्रयमगुर्यद्वाऽस्पृशन्तीं गतिम् ।
आश्रित्याऽगुरवाधशाश्वतसुखं सिद्धान सदा तान्नम,
( सिद्धेभ्य एभ्यो नमः, ) आत्मा० ॥१०६॥

येषामूर्ध्वमलोकघातितत्तमाऽस्याद् पूर्वयोगाद्गतिः,
कर्मासङ्गनभेदतोऽथजनिता बन्धच्छिदो वाऽऽत्मनः ।
स्वाभाव्याच्छरमुख्यवस्तुनिवहे यद्वत् सद्भ्यो नमः, आ० ॥१०७॥

गर्भो जन्मजराऽऽधिरोगनिचया नैषां भवेयुः पुरो,
निर्बाधं क्षतकालमानमपरावृत्तं शिवं शाश्वतम् ।
धामाप्येत जिनोदितात् स्वरमणाच्चारित्रतो मार्गगै-
रात्मारामपदं स्मरामि नितरां चारित्रमत्युज्ज्वलम् ॥१०८॥

सालं चारित्रगुम्फां भविजनततये धारणायात्मशीर्षे,
ग्रन्थित्वैनां ददामि प्रतिपदसुभगां लब्धुमग्र्यामवस्थाम् ।
तेनावाप्नोमि शश्वत्सुखमयपरमानन्दधामेति याञ्चा,
देवानां सद्गुरूणां सुविहितयतिनां सत्फलाऽस्तु प्रसादात् ॥१०९॥

पूज्याराध्यपदानां नवकं जीवादीनां नवतत्त्व्याऽनु ।
पञ्चकमत्र महाव्रतनद्धं चैत्यादीनि च सन्ति तु सप्त ॥११०॥

देवः साधुर्धर्मो रत्नान्याप्तुं ज्ञानं दृक्चारित्रे ।
इत्येषा गीता जैनीया षड्त्रिंशदध्यायसमेता ॥१११॥

# ॥ श्री आगम-महिमा ॥

आर्हन्त्य शुभसाधनैगमिमत धर्मोऽपि धन्व हित,
    यन्च त्व त्रितय भवम्य भवनैगुण्य धिन्न् गिष्टान् ।
तन्नून महता पराधपरता मया पर सत्कला-
    ऽसाधाप्यामलकेवल यदि भणेन्क्रेणि सम्प्राप्तागमीम् ॥१॥

प्राप्याऽशेषनगद्विलोकनपर ज्ञान निहत्याऽशुभा-
    ऽन्ष्टधेणिमपाग्मारघल्युक्श्रेण्या क्षपण्या प्रभु ।
दवेन्द्रारलिमहत्तामतितरा पूजामधिष्ठाय च,
    कुर्वन्नागमसन्तति सफल्तामाग् नान्यथा हि प्रभु ॥२॥

पूनार्थोटो जिनेशो न नमति निखिलामीष्टसिद्ध्या कृतार्थो,
दयालिप्राभृत मत् सुहृनतकल सेरयन् कश्चिदन्यम् ।
धन्य नूत्नमधर्मा नमति मुनिगण द्योतयन् स्व कृतज्ञ,
यस्मेऽद मज्जिनत्व मुनिगणपधृतात्मागमादव जातम् ॥३॥

सुरयिमरसाहत मुनिमधुपमालि मपत्नचरणदायिन,
नमत नम्रमौलयोऽधिकृतसत्स्नोमय सन्नागमादिदर्शिनम् ।
फल जिनेन्द्रपादपे वरे गताधिसत्तपे सन्नागमोपदेशन,
सदैव तीर्थमुद्दिशन् भवाब्धिमोक्षमादिशन मन सुष्ठासारको
जिनेश एव नापर ॥४॥

भव शास्त्रालि भव शास्त्राद्रि शास्त्रालि भव शुद्धाते ,
जिनपतिगदिता गणपतिविहिता मुनिजनमान्यता विमलार् ।

नरभवनिकरोऽसमफलविसरो भावितभावो गतदोःस्थ्यो,
नम्रशिरस्को विगतरजस्को भवति नरस्तद्भजनमनाः ॥५॥

चलति जिनेशः सुरपतिविततादासनात् सिंहयुक्तात्,
भविजननिचयं हतवृजिनचयं देशयंस्तीर्थमार्गम् ।
गणधररचिते विविधनययुते शास्त्रवृन्दे विधातुं,
तीर्थानुज्ञां पूजाऽक्षुण्णां दर्शयन्नागमोक्ताम् ।
( प्रोत्थायाऽर्हन् विनयमनुदधदासनात् सन्दधानः ) ॥६॥

सुरेशा नरेशा जिनेशा न सर्व, सुसर्वज्ञतालाभमिहार्चयन्ति ।
अनुज्ञां परं कर्तुमिहागमानां, सदैवाद्रियन्ते गणेशितृपूजाम् ॥७॥

देवो गुरुर्धर्म इति त्रयं जने, भवाम्बुधेर्निस्तरणाय योग्यम् ।
तदेव चेदागमवाङ्निरस्तं प्रतिक्षणं संसृतिवृद्धिकारि ॥८॥

पूजा जिनानां शमिनां सपर्या, धर्मस्य वृत्तिर्भविना शिवाय ।
सा चेद् भवेदागमवाण्यपेक्षा, नो चेद् भवानां परिवृद्धिकर्त्री ॥९॥

एतदेव दुष्षमास्खलायितं, कर्म वा पचेलिमं भवद्विषाम् ।
दक्षिणार्धसम्भवो यदेष ते, क्रियते सुकृतमागमादरः ॥१०॥

पूजा जिनेश ! भवतो भविना कृता सा,
सम्यग् ( सेवा ) भवोदधितरिर्भवतीह जन्तोः ।
सामायिकादिसुकृताचरणं ( महाफलं ) शिवाय,
चेदागमोक्तिपरमान्तरमाप्यतेऽत्र ॥११॥

साम्राज्यं जिनशासनस्य न भवेदभ्यर्चनादर्हतां
सूरीणां सततं महादरकृतेर्नो नैव चार्हन्मते ।

प्रोद्भावप्रभवैककार्यकरणात् किन्तूत्पादार्हताद्,-
वस्तु श्रोतृगणस्य चागमगतात् सद्बुद्धिरुन्योयुगात् ॥१२॥

मोघं त्वद्भजनं जिनेश ! यमिना ससेवनं सादरं,
तीर्थोत्सर्पणहेतुधर्मललनं जाग्रज्जगद्भासनम् ।
निस्त्वेतत् सकलं भवेत्फलयुतं चेदागमाना तव,
प्रजालेऽसन-सत्क्रियं यदि भवेत् पुसां जनुर्दुर्लभम् ॥१३॥

कथं ज्ञेयं वृत्तं तव सुचरितं दोषविकलं,
कथं स्थाप्या मूर्त्तिस्तव जिन ! गताङ्का शमरसा ।
कथं ते मोक्षाध्वप्रगुणगणोद्दाममुक्ति,
न चेत्पा शुद्धा भवति भुवने ह्यागमततिः ॥१४॥

ह्यास्याधायि जने घने मम विभो ! मौग्ध्यं परं दृश्यता-
मात्तो यन्चिरकल्पकालजनितो निष्पत्तये शमणाम् ।
त्यक्त्वाऽध्यक्षसुरार्पकान् सुनियतान् ह्यातेयतीर्थ्यान् श्रितान्,
चेत्ते नागमसन्ततिं प्रभवति प्रोद्दाममोक्षाध्वने ॥१५॥

अध्यक्षमेतद्विदुषा प्रघोष्यते, यद् ग्राह्यतामेति समक्षमूहितम् ।
मृतं चिरातीततरं समाश्रयैस्त्वा किं ब्रवीमि जिनपागममान-
यच्चियत ( वञ्चित ) ॥१६॥

न्यायं सार्वजनीन एष विदितो यद्दीक्षिते नालके,
नश्यन्योदरिवे रुचिर्मतिमता जाड्यस्य जातादरा ।
तर्किं सारं ! मया जगत् सुविदितं सौख्याकरं सूद्धितं,
हा ! ते ह्यागमसन्ततिर्न च मता पापात्मनाऽधीमता ॥१७॥

नरा जगत्यां किल साम्प्रतेक्षिणो, धरन्ति सञ्ज्ञां खलु दीर्घकालिकीम्।
साफल्यमस्या विदधाति विद्वाँस्त्वदागमोद्‌बुद्धभविष्यदर्थः ॥१८॥

कथं लक्ष्यो देवः प्रशमरसरतोऽबाध्यशिवगः,
कथं सूरिः श्रेयःसरलतरमोक्षाध्वधृतये।
कथं यम्या यामा भवजनिमृतेर्दुःखहतये,
न चेत्ते साक्षात् स्यान्निरुपमकृतिर्ह्यागमगता ॥१९॥

तीर्थं तीर्थं जिनानां न तु जिनपतयः किं न दुष्टोक्तिरेषा,
मान्या सा सर्वमान्यैः स्वयमुदितचरी श्रद्धयाऽप्यागमानाम्।
सत्यं सौरः प्रकाशः प्रभवति जनता ज्योतिषेनैव सूर्यो,
नैषा सूर्यस्य हानिः स्वप्रभवसुषमया तद्वदाप्ते स्वतीर्थात् ॥२०॥

सुविदितं खलु सज्जनसन्तते–र्यदधमं परलोपविकत्थनम्।
तदपि हृष्टिचरं नहि चेद् भवेत्, भवति सत्पददाऽऽगमसन्ततिः ॥२१॥

न्यायो यदेष जिन! मानभरः स्वबोधे,
यत्तेन बाधितमरं स्वहिताय जह्यात्।
नाथाऽऽगमावलिरसाञ्चितचित्तभारो,
लङ्घेय मोक्षपदलीनमनास्त्वहं तम् ॥२२॥

मत्तो जनो न जगतीह समीक्ष्यकारी,
यत्सोऽधिगच्छति पदार्थमपेतमानम्।
सार्वागमोक्तिरसपानविमुखचेता,
वेत्ता जगत्त्रयमिति प्रबलं न मानम्? ॥२३॥

जगति जीवनजातमहो! मतं, प्रतिक्षणं विशरारु रुगर्दितम्।
तव जिनागमसञ्चितसंयमैः, प्रतिकलं पदमाप्यत उत्तमम् ॥२४॥

जिन ! त्वागमा मया विलोकिता न सौख्यदा,
यतो भवा अतीतभाविदुःखभावसंभृता ।
प्रदर्शितास्तके पुनर्मुदास्पदं तवे यतो,
विचूर्ण्य तान् पदं लभन्त आन्यय संसाधना ॥२५॥

मत्तो जनोऽयं जिनराट्! सदागम-पानैर्मीनो न वहिन चान्त ।
जानन् हि तत्त्वं मनुते यनाम-त्रिकालतत्त्वो नहिं साम्प्रतेश्री ॥२६॥

जिनागमानां महिमोद्भवाय, त्वया श्रिता या त्वमरस्त्वदर्थम् ।
सत्प्रातिहार्यं रचिता सुपूजा, गताघमानो जिनराट तथापि ॥२७॥

मता गणेशा जिनराट तन्नामी, सार्वस्यभावान्वितसन्मुनीन् यत् ।
निलङ्घ्य तिष्ठन्ति पुरस्तवेदं, रक्षाकरं त्वागमजं परं बलम् ॥२८॥

वितन्यते मञ्जुलमङ्गलानलिं, सत्र जिनाद्या जगतीह दीप्रा ।
परं नमस्कारकृतेस्तनाम्ने, नमो भणन्तीह सदागमज्ञा ॥२९॥

नार्हन्त्य महिमास्पदं तत्र जिन! श्रित्वाऽऽमरीमर्हणा,
नैनाऽनन्यसमा श्रियं श्रयसि सत्रायित्रिमाद्युद्भवाम् ।
नैनानङ्कगणेन्द्रराजिरचनालब्धप्रतिष्ठोद्भव,
किन्त्वेषाऽऽगमसन्ततिगतमला माऽऽद् युधाना कृता ॥३०॥

महत् खलु प्राप्तमिदं यशोऽभिधं, त्वया जिनेन्द्रोदितसयमेन ।
पदनर्यीमात्रमिहापर्यैस्त्वं, सर्वागमाना प्रभवो विगीत ॥३१॥

य भ्राम्यमाणस्तमुपेयिवासो, जीवा भवे तानवतोप्रभावा ।
अज्ञानभावेऽपि सदागमा ये, यस्तान् स्तुयानैव सतत्त्ववेत्ता ॥३२॥

कृतघ्नतामप्रतरा अमी खलु, जीवा यदाश्रित्य ममोक्तितत्त्वम् ।
मामेव हास्यन्ति भव त्यजन्त-स्ता जिनागम इष्टदायी ॥३३॥

कृतघ्नता–बुद्धिधरान् समस्तान् , जीवान् भवात्तारयितुमुदर्कम् ।
अभावयन्नुत्तमसत्त्वधारी, सदागमोऽयं सततं प्रवृत्तः ॥३४॥

सदागमाश्चैव सदागमा भुवि, कृतघ्नतां ये भवभावभाविनीम् ।
विदन्त आशूपगतां नराणां, सदा सदानन्दपदाय मग्नाः ॥३५॥

अतितरां ननु नैव विराधितो, जिनपतिस्तनुते विविधां व्यथाम् ।
करणयोगभुवा क्रियया पुन–र्यदि च ( भवति ) लेशत
आगमजो त्रिधिः ॥३६॥

विराधना या जिनराजराज्या, विशोध्यते सा गुरुनोदनाद्यैः ।
परं विराद्धा विशदाऽऽगमाऽऽज्ञा, भवं दुरन्तं तनुते समेषु ॥३७॥

जिनोऽपि सार्वो निखिलं विदन्नपि, प्रसङ्गप्राप्तं निरवद्यभावम् ।
साधुव्रजोद्धारपदं न चानु–जानाति चेदागमवाग्–विरुद्धम ॥३८॥

यदपि केवलमुत्तमतां गतं, निखिलबोधकता न परे यतः ।
तदपि नन्दिपदं जिनपागमाः, क्षणपदं तत एत इहार्हते ॥३९॥

शुद्धेः पदं जिनमते भविनां यदाऽऽदा–
वावर्त्तमन्त्यमधिगच्छति कालसौम्यात् ।
न्यायात् सदन्धकरणा द्रुचिरागमानां,
जागर्त्यहो ! जनिभृतां (भुवि तदा) करुणाऽसमा वः ॥४०॥

नीतिः सत्तमगोचरा ननु जने पूज्यत्वदानं परे,
चक्री यत्कुरुते महोत्सवपदं चक्रं स्वकं मोदतः ।
सत्यं तद् भवतारकाङ्क्षितपदं भो आगमाः शाश्वता ,
यूयं दत्थ जिनेन्द्रराजय इह प्रोद्दामपूजान्वितम् ॥४१॥

नयति नौस्तटमम्बुधिपारगं, प्रवरपण्यभरं फलमश्नुते ।
ननु च नाविक उत्तमतां तथा, ननु लभन्त इहागमतो जिना ॥४२॥

ऐरा रैरा विदन्तो ननु जिनपमहात् पूजयन्तीह शास्त्र,
पूजा धत्ते च शास्ता प्रमुरव इह भुवो देशनाया प्रकामम् ।
सङ्घस्याप्तागमान् यद्धरति सुनिपुण सर्वकाल यतोऽसौ,
नीर्ति लोकान् ददर्शाऽतनुमहिमभुव पूज्यपूजाङ्किता ताम् ॥४३॥

जगत्पतित्वमहता मत जिनेन्द्रशासने,
न मन्यतेऽमुना यत परस्पर विरोधभाक् ।
त्रिकालग जगन्न तु प्रभुप्रभावभाजन,
सदागमा सनातना जिनास्तदुपदेशका ॥४४॥

कथ मायाद्विष्ठे जिनप ! तव यशो दिक्षु स्फारसु
दधौ जन्मान्त्य यत् प्रवरनृपगृहे सत्कुलगत ।
गतोऽप्यन्ते मोक्ष न च तत विशेषो जगति नु,
त्वदुक्तो यन्नित्य वनुत आत्तो महपदम् ॥४५॥

सदागमा सदा जनेषु धर्मभावबन्धुरा,
जिना सन्त्येव सान्तरा निरन्तरा इमे पुन ।
पर न शुद्धशब्दभारूपधारका अमी,
सद्धरूपता परा दधत आपरूपत ॥४६॥

अतीतकाल आर्हतों सदागमावलीमिमा—
मवापुराहता पर सदात्मशुद्धिज परम् ।
श्रिता विशुद्धिमार्गतो विहाय मन्मतिं परा,
शुभाविनोऽपि तद्वदव कीर्तिराहता र क्षा ॥४७॥

नरो भवेद्यदा पुनर्विधूतपापकश्मलः,
सुधर्मसाधनोद्धुरो विहाय कालमार्भकम् ।
श्रितो भवस्य यौवनं तदा ध्रुवं सदागमान्,
विचिन्त्य कार्यमादधाति मोक्षगामी च पुनः ॥४८॥

शस्यते समस्तधर्मवेदिभिः; स मानवो य आगमं समाश्रितः ।
दूषणं परस्य शंसने मतं, यतस्ततो भवति दृष्टिरावमी ॥४९॥

आस्तिक्यं किं मतं भो ! द्विविधमनुपमं लौकिकं चोत्तरं च,
प्रेत्यादेर्बुद्धिराद्यं गदितमनुभयं सार्वसूक्तागमेषु ।
नित्योऽनित्योऽपि जीवप्रमुख इह मतो मुद्रया स्यात्पदाङ्कया,
मोक्षान्तस्त्वागमोक्तेरिति मननमिहानुत्तरं चोत्तरं तत् ॥५०॥

सम्यक्त्वचिह्नानि शमादिकानि सद्भिः प्रशस्यानि तदैव चेद् हृदि ।
जिनेन्द्रदेवागमवासना–सुधो–क्षितत्वसौख्येत बलीय आप्तैः ॥५१॥

शमोऽप्यनन्तेषु भवेषु चीर्णो, निर्वेदसंवेगघृणास्तितादिः ।
परं न जैनागमसंस्कृतं तद्, जाता ततो नैव ममाभिनिर्वृतिः ॥५२॥

सदागमा भो ! कथमर्हणापदं, गताः सतां वर्णपदादिसाम्ये ।
उक्ता जिनेन्द्रैरिति चेत् तर्के कथं, प्रमाणमित्यन्यपदं न किं मतम् ॥५३॥

सदागमानां भगवान् प्रणेता, प्रघोष इत्थं न सुखाकरः स्यात् ।
उच्यन्त आप्तैर्ननु शब्दमात्राद्, न चार्थरूपास्तु वचो व्रजन्ति ॥५४॥

वक्ताऽर्हन् भुवि देशनाश्रयगतोऽर्थस्याश्रितः सन्नरैः,
किं सत्यं तकदुच्यते न पुरुषैर्वाच्योऽर्थ आप्तो मतः ।

सद्भिरप्ता यत् तन्निरूपणात् शास्त्रा मत्यागमिधा ,
त्तास्ते न तत्र परस्परगतिर्निर्गताममाना क्वचित् ॥५५॥

मत्यागमा । किं भवता महत्त्व, तुरंगशृङ्गाणि यतो न यूयम् ।
व्याघृष्वर्गोऽन्यत्रचामि यद्वन् तिरागमाना इति शिक्षयीक्ष्या ॥५६॥

जिन गणि धृप श्रयन् भवी तपन् महातप ,
सुपुण्यराशिसाधनोद्यतश्च यष्टमाश्रयन् ।
यचोतिग न मुच्यते मत्यागमान्तते ननु, (भवन्मता)
यथार्थभावमाननाक्रन्त इष्टमिद्धय ॥५७॥

जनत्य ननु सिद्धमागममतान् सिद्धाञ्जिनान् साधुपान् ,
पाठक्युक्तमुनीन मनोगदि भवी ध्यान् गुरूंश्चादरात् ।
धर्मं चाश्रयति प्रधानपदवीं प्राप्त सुदृष्ट्यादिक,
तत्सत्य श्रिनिरागमम्य जनतानि श्रेयसे साधनम् ॥५८॥

आगम आप्ततमो यदि विश्वे, विश्वजिना प्रणीतार्थपर स्यात् ।
न च हित्वा कर्मभेर्तपस्तु, शुद्धि सोऽश्नुत आप्तपद तु ॥५९॥

परभवकरणिजनिमृतिहरणिर्निभवल्लभरणि नगति परा,
जिनपतिकथिता गणपतिग्रथिता मुनिजननिचिताऽऽगमरितति ।
न मनदात्त चरमावर्त्ते नियतमनार्त्त मान तन्वा,
गन्या निजुधा आगमसुबुधा गतसम्मापा भवत सदा ॥६०॥

शरण शरण प्रन प्रन शरण जिनपागमपद्मभरण,
करण हरणे यत यत हरण सद्भिरदुर्गादुरिततते ।

धरणं धरणं वृणु वृणु धरणं निजगुणसन्ततिसारमतेः,
स्मरणं स्मरणं कुरु कुरु स्मरणं (सरणं) संवरनिर्जरमोक्षगुणे ॥६१॥

शुक्ल पक्षं निश्रितममलं, रक्षसि भवधारिणमसुमन्तम् ।
कृतहा परमसुको यदिह त्वा—मागम ! याति निरस्य निवृत्तिम् ॥६२॥

शस्तः सार्वसुखैः संसारी यः स्यादागम ! तेऽध्वनि पान्थः ।
प्राप्तौ वीर्यमनाहतमन्ते भूत्वाऽतन्त्रः शिवमत्येति ॥६३॥

स एव सम्यक्त्वधरोंऽशतो वा, पापान्निवृत्तो निखिलाच्च जीवः ।
सदागमा ! यो भवतामधीनः, परो भवामेध्यकृमित्वरूपः ॥६४॥

देवं गुरुं धर्ममल भवन्तं. सदागमाङ्घ्रीशरणं समेतः ।
रहस्यमन्त्वेन समेति चेन्न, हहा ! भवाम्भोधितलं समेति ॥६५॥

शरणमेति जनो व्यथयाकुलो. यदि परं परिपश्यति पालकम् ।
भविजनोऽपि तथैव तवागमं, ननु भवन्तमपीड उपेक्षते ॥६६॥

अर्हन् सिद्धो गणपतिरुपाध्याय आत्तव्रतोऽसौ,
सम्यग्दृष्टिः शुचिमतिनिपुणः सद्व्रती सुतपस्वी ।
चेत्ते शुद्धागमरससुधयाऽऽढ्यो भवेद् भावभूति-
र्नोचेत् संसारकूपे वलयमनुगतः संसरेन्नीच (निन्द्य) रूपः ॥६७॥

जगति वित्तमशेषविदां मते, परिणमेत् परिणामधरः पुनः ।
ननु तवागमपूर्णविदात्मता समूलनाश उपैति कथं हहा ! ॥६८॥

पापं न जात्वेति यतं क्रियायां, गतिस्थितिस्वासनसन्निभायाम् ।
ध्रुवं समेतीतरथाऽवधेऽपि, परं विशुद्धागमसंस्कृते हृदि ॥६९॥

सन्नागमा धीनमनूनम न्यये, यत सजीवेतरबोधतोऽन्ययम् ।
फलन्ति यूय निखिलाङ्गिवग, यानद्भवद्भिर्न समोऽत्र विश्वे ॥७०॥

ज्ञानेन क्रियया च सङ्गतमिद जैन मत सद्यश ,
सूते यत् परन्श्नानि न तथा साकल्यभाक्त्वान्तते ।
तत्रापि क्षमते मत विरहित जैन क्रियाभि पर,
नो जैनागम ! शून्यता तत्र पर नैवाऽन्यमी मुन्यते ॥७१॥

सदृन्दृष्टी निदि वत्तने शुचिमना उद्यच्छते स्वात्मना
चेन्छक्तस्त्रिकसश्रयाय न भवेज्जैनागमा शाश्वतम् ।
स्थान शुद्धमुपैत्यमो वरमतिर्य सश्रयेन्तुद्धितो,
रूप यद् भवतामनूनमहित शेपद्वयेप्सु सक ॥७२॥

लाभो लोभफल खलु प्रभुमते जेगीयते ज्ञैनरै-
स्तन्मिथ्येक्ष्यत आहतागमसुधालाभे परा यन्मति ।
प्रज्ञाप्यानखिलान् विबुध्य परतो लुभ्येन्न कोऽपि श्रुते,
चायो व्याप्नुत आहत खलु भुवि स्याद्वादमुद्राङ्कित ॥७३॥

मनुत मनुत भावानागमज्ञानदिष्टान् ,
नहि परगतभाव स्पाशनादिर्विबोध्य ।
इह परजनबोधे हेतुरस्यागमस्य,
न भवति खलु कार्यं कारणोद्भावशून्यम् ॥७४॥

चक्षुरदेव जिनपागमवेदन यत् , स्वान्यप्रकाशकतया निजरूपमीर्ते ।
चित्रो विधिस्तत ईहागमदान उक्त,
उद्देशनान्निपरे न विदा चतुष्के ॥७५॥

जागर्पि जैनागम ! जन्तुजाते, बोधं समेतं क्रियया वितन्वन् ।
विवृद्धपर्यायमुनिः प्रदिष्टः, क्रमात्ततस्त्वत्प्रवीणैर्जगत्याम् ॥७६॥

बोधमुखानि पराणि मतानि, धिक्कृतसत्कृतमार्गगमानि ।
नाऽऽगम ! जगति नु क्रियया रहितः, फलति ततस्त्वं विद्धृतात्मा॥७७॥

सत्यं चक्षुष्पदमनुकुरुते ह्यागमज्ञानमग्र्यं,
जैनं तच्चेद् विबुधपरिमतं नैव चारित्रहीनम् ।
स्वं दावाग्नेरवति नियतं यः क्रियावान् स चक्षु-
र्हीनेताशु प्रतनुमतिकोऽप्राप्तसद्बोधवृन्दः ॥७८॥

आगमा ! जगति गृयमात्थ यद्, वस्त्वपर्ययं भवेत खपुष्पवन् ।
ज्ञानमक्रियं नु तर्हि किं मुधा, खण्ड्यते क्रियात्र सद्व्रतात्मिका॥७९॥

सदागमा ! भवद्भिरेष आश्रितो न यो भवे-
न्न यद् व्रजेद्विषादितां स सम्पदर्थको नरः ।
न चेदसङ्ख्यभागगं निगोदमेकमुहूर्तं,
सदा भवत् समीक्ष्य किं सदोद्यमोऽत्र वो विना ॥८०॥

न्यायस्त्रिलोकगतजन्तुगणे प्रसिद्धो,
लब्धा श्रियो भवति यो भवतीतखेदः ।
उल्लङ्घ्य तं ननु सदागम ! ते प्रवृत्ति-
र्यत् खिन्नभावसजुपि श्रियमादधासि ॥८१॥

मयोः पृष्ठे भारो य इह न मायात स गलके,
निबन्ध्यो लोकेनाहृतमिति लघुप्राप्तमतिना ।

त्वयाऽमाता मोक्षे नमगतितले ते निनिहिता,
यये मोहाङ्कगेद्दलननिपुणा आगम! नरा ॥८२॥

भमन्त किं स्तुत्या यदिह भमता ये स्तुतिपरा,
भवान्त ते याता ननु च विमल निश्चिततरम् ।
न तन्नात्मान भो! कथमपि स तत्त्व नयथ तत्,
घृथापन्नो न्यायो यदुत न मुधा यनगतक्रय । (नयगति) ॥८३॥

मया प्राप्तव्य द्राग् जननजल्धेस्तीरमचल,
यन्न सिद्धयेन्द्रुद्धागममतितति पूर्णघटना ।
विसवादो नैवामलमतिजुपामत्र सुविधौ,
पर नाह वद्विनहि च विपयोऽस्त्यागमतते ॥८४॥

महिमानममितमेति साऽऽगमालिराहती जने,
यतो हितोपदेशकृन्मुमुक्षुसाधुसन्दर्भहापरस्परनिरोधभाक् ।
जगति वीक्ष्यता पर नेतरा तथेति तर्कवाददक्षताधरा ,
श्रद्धया पर श्रयेयुरहदुक्तता यतो न चैत्रमात्रय परस्पर निघातकृन्
सताम् ॥८५॥

आगमवृन्दमिन महनीय पूर्वमिहार्हत्साधुवृपाद्,
मानमिहास्य मत निपुणाना तद्गतवाक्यसुधासरणि ।
चेद् गतमानमिहेतत्पात्र तत्त्रितय न कथश्चिच्छ्रये,
मत्वा सनमिद गतमाना मनुत सदा तत्त्वत उत्कृष्टम् ॥८६॥

चैतन्यज्ञानभाज समजिनपतयो द्रव्यकालाध्वभावै-
र्जीवादीन् सवभावानमितपरिगत पयय शुद्धरूपान् ।

बुद्ध्वा प्रज्ञापनायाः पदमसममितान् बोधयन्तीद्धबोधान् ।
जीवाँस्तद् द्रव्यभावात्मकमितरदिहाप्तागमीयं श्रुतं स्यात् ॥८७॥

शमोऽसमं साम्यमुपैति चिन्तनात्, चेत्तच्छमोदन्तफलोहकं स्यात् ।
तथोहनं नैव सरागशास्त्रात्ततः शमात्मात्मक आगमः शुभः ॥८८॥

आगम ! उद्धर मां भवभीतं दृष्ट्वाऽगम्यां तव गतिमीहा,
कञ्चिच्छित्रमुत्तारयसि त्वं लगति न यत्र मुहूर्त्तमनूनम् ।
कञ्चिदुपार्धविवर्त्तभवान्तर्लीनं कृत्वा तत उद्धरसे
चित्रं कालं तावन्तं त्वं फलसि विलम्बं कृत्वाऽपि द्राक् ॥८९॥

आगम ! तव सेवापर आत्मा चेज्जन्माष्टकमपगतभेद,
तद्भव एव भवेत् स निवृत्तिं पूर्णामात्मनि धर्तुं दक्षः ।
उत्कृष्टां यदि तां मुनिरीर्त्ते तद्भव एव मुहूर्त्तार्दवाग्,
भवसि तटार्थी भववार्धेस्त्वं कुरु मयि रङ्के लघु तां सिद्धिम् ॥९०॥

उत्साहस्ते विधातुं परमशिवपदं संश्रितानां नराणां,
तेऽप्याप्तुं तत्सदोत्काः भवभयविधुराः साधनं ते तथैव ।
कोऽत्रास्ति प्रध्वरां यो विफलयति समां सत्प्रवृत्ति भवान्तः,
हाहा शुद्धागम ! त्वं मतिततिसनघां प्रेक्ष्य कार्यं विधत्से ॥९१॥

या यत्यतेऽङ्गिनिचयो लघुसिद्धिमाप्तुं,
शुद्धागम ! त्वमपि तत्पथपाटवोऽसि ।
सिद्धिः पुनर्भविजनान् वरितुं समुत्का,
सव्यत्वमेव विविधं विविधां (तु विधिं) विधत्ते ॥९२॥

चित्र भ यगत मत श्रुतिधरैर्म यत्वमत्राङ्गिना,
किञ्चिनैव फलेन कदाचिदमर दत्त्वा पर कालगम् ।
वैचित्र्य प्रणिधाय सिद्धिपदक किञ्चिन्नि वागमा !,
युष्मत्प्रोक्तमल चतु शरणमान्त्वा फलेनान्यथा ॥९३॥

शुद्धागम ! त्व विविध विधाता, यत श्रयस्त्वा खलु जीव आदौ ।
अहन् गणेशोऽनरकेवली वा, भविष्यतीति नियर्ति विधत्से ।९४॥

एकस्वरूपोऽपि कथ विचित्रा, (विधत्से),
सम्यक्त्वकाले हि तथाविधा जने ।
जिनेन्द्रमुख्यै खलु चित्ररूपै,
फले फलन्तीमृजुमागमनियाम् ॥९५॥

आदिष्टा निधय सदागम ! भवोत्ताराय ये ये त्वया,
न्यस्तौस्तानिखिलान् श्रयन्ति भविन प्राप्तु शिव सोत्सुका ।
निर्वाण परम त्वया फलतयादिष्ट पुरैवाऽऽश्रितान्,
वैचित्र्य किमनेहसो धृतमिहावल्गुप्रमादास्पदम् ॥९६॥

सदागम ! त्वत्कथिताशया इमे, ध्यानिरे त्वत्कथि (दृगादि)
तारयाङ्गिन ।
फल विचित्र विविधाद्धि कालाद्रव्य महत्त्व ननु हा ! कथ ते ॥९७॥

नयैर्विहीन न च तेऽस्ति रूप, सदागमेमे च विचित्रताशुप ।
न चान्यरद्धयेकनयाश्रितस्त्व, ग्राह्यश्च धार्यश्च कथ नु गम्य ॥९८॥

१ समग्रधर्माश्रितवस्तुवाच प्रमाणतामिच्छति याच आप्ता ।
नन्वागम ! त्व नियतार्थधर्म प्रमाणभावो ननु ते विरुद्ध इत ॥९९॥

श्रद्धायुतैर्ननु भवान् प्रमितिस्वरूपं,
नीतः सदागम ! सदापि यथार्थभावात् ।
वर्षागतं प्रवरवारि यथा गृहीतं.
वर्षेण वर्षमिति सद्वगुदीरयंस्त्वम् ॥१००॥

भवाब्धिचक्रचङ्क्रमोऽपि जन्तवस्तवेक्षणात्,
सदागमा सदागमा भवन्त्यनूनसद्गमाः ।
परं भवभ्रमाँल्लघूनबाधबोधसङ्गमा,
व्ययन्त आप्यते यदा त्वयोदिता क्षरावलिः (क्षितिश्रितिः) ॥१०१॥

वाच्या न या सद्विदुषां न गम्या, योगोद्यताना न च नेत्रगम्या ।
चक्षुष्मतां साप्युदिता त्वया वाग्, न तां स्तुते ह्यागम-
सद्गिरं कः ॥१०२॥

परापरागमेक्षिता न यावता निवर्त्तते,
परम्परागमेशिता न नाथ ! मे विवर्तते ।
परम्परागमोक्षितं पदं न तावताऽऽगमाः,
परम्परागमाश्रयद्भिरट्यते न संसृतौ ॥१०३॥

जयवन्तमनन्तगमं सुगमं, विदधन्निखिलार्थविकाशगमम्,
वरसंवरनिर्जरमार्गपरं, दुरितौघनिवारकसत्यधरम् ।
ननु सेतरजीवविबोधकरं, स्वकसिद्धियुतं परसिद्धिकरम्,
जिनराजमुखोदितवाच्यपरं, नमताऽऽगमसुप्रतरं विबुधाः ! ॥१०४॥

आगममुखमावश्यकमर्घ्यं, सामायिकमत्रादौ सर्घ्यं,
दृग्ज्ञानाऽऽचरणानां नियमं, शपनमवद्यात्मकशमविषमम् (?) ।

त्रिविध त्रिविध यात्र भ..त्रैकालिकदुरितात्ययगम्ये ,
जिननायकपथि निम्नो मुरय , न स्यात्सामायिकमतिमरय ॥१०५॥

नर कृतज्ञो गुणजातमाश्रितोऽपक तु तम्योत्तमतापन्नाश्रितम् ।
ध्यायात्तन्नाऽनन्तगुणार्पक चतु र्वि न स्तव स्तौति परागम न क ?॥१०६॥

उत्पन्नम ध्री प्रवर हि मौक्तिक दन्तु साधा विषयाश्रित नरम् ।
यथोपकारीह तथा मुनीशोऽप्ययञ्जिनोक्त चरण प्रणम्य
( स्तागममठतीदनम् ) ॥१०७॥

प्राप्त चरण महिता जिनपा, नतयो विहिता प्रतिमिरपापा
( नेऽपापा ) ।
निरतिचार तत सफल स्यात , प्रतिक्रमणागमतस्तत्सिद्धि
( तुर्याध्ययनागमतस्तत्सिद्धि ) ॥१०८॥

न चाऽऽगसा दुष्कृतवाग्विशुद्धता, जने समेषा कतिचित्त पुन क्रियाम् ।
आगाम्यपेक्षन्त उत्तारसत्कृति, तथोत्सृज सचरणागमो प्रती ॥१०९॥

सन्तोषो नत्र शास्त्रे न च धननिचितौ सज्जनाना नराणा,
मोक्षे यान समेता न हि निनयतयस्तुष्टता यान्ति धर्मे ।
तद्वत् प्राप्तो वरेण्य शिवपुरसुगते सच्चरित्र मुनीश ,
प्रत्याख्यानागमाय सततमुन्तिषी सन्तरायथमुत्व ॥११०॥

जैने ह्यागम उत्तमो यत इहाहारादिचेष्टाऽखिला,
निश्रायाऽङ्गिदया समस्तसमितीगुप्तीश्च तिस्रो यरा ।
तद्दशकालिकनामशास्त्रविहित मत्वा समस्त बुधा-
स्त पाठय शुभमाघवे प्रतिदिनात समाधयन्ति स्फुटम् ॥१११॥

चारित्रं विधियुक् तदा शिवपदाचालं भवेन्नान्यथा-
ऽसौ शय्याहृतिवाससां यदि परामन्वेषयेदेषणाम् ।
तां चैका वियुता दिशेद् वरतरा या पिण्डनिर्युक्तिवाक्,
तत्तामागमसत्यतत्त्वविदुषो घोषन्ति मूलात्मिकीम् ॥११२॥

मान्याः सदैव विधयो विदुषां विदुक्ता-
श्चेतोहरा यदि परं शुचितर्कविद्धाः ।
ज्ञातादिभिर्यदि भवन्त्यनुलपरङ्गाः-
स्युरुत्तराध्ययनमागममाश्रये तन् ॥११३॥

हिंसानृतादीन्यशुभावधामेत्युशन्ति सर्वेऽपि परे हि तीर्थिकाः ।
षट्कायबन्धादिविदस्तु विज्ञा आचारमङ्गं मनसा श्रयन्ति ॥११४॥

जातायां भूरि सम्पदीतरजनस्तैन्यादिजं साध्वसं,
तद्वत्तीर्थिकसम्भवं श्रुतिमतश्चारित्रिणस्तद् ध्रुवम् ।
अङ्गं सूत्रकृतं ततं गणधरैराचारसूत्रात् परं, (तत्तर्काङ्कितसंयमा-)
तर्काङ्कं व्रतवादमागममिमं विज्ञाः श्रयन्तु श्रियै ॥११५॥

लब्ध्वा वित्तं गतचरटभयं श्रेष्ठिना गण्यतेऽट्टे,
सौवर्णं तत्र मुख्यं गणयति तदिवार्थान् दशान्तान् सुदृग्वान् ।
सङ्ख्यां कर्तुं मनसि विधृतवाँस्तत्तृतीयं सदङ्गं,
स्थानाख्यं ह्यागमज्ञैः प्रतिदिनमनघं श्रियते सर्वशुद्ध्या ॥११६॥

चिक्कणे चिक्खले (कर्दमे) काकिणीं वीक्ष्य विज्ञः,
सदोद्धर्तुमीहेत तदानुबन्धम् ।
जिहीते न चार्थस्तदीयं प्रतीत्य,

समाख्याति तुर्येऽङ्गशतान् समेग्यान् ।
समस्तेऽथ श्रेष्ठागम त श्रयध्वम् ॥११७॥

आम्नो निर्भीक आप्तोऽनघक्रनस्तति यो दधात्यथजात,
सोऽहुदस्ते पूर्वनश्यागतमुक्तिमनुस्मृत्य वृत्त सुशील ।
सद्वान् तद्वद्‌व्यागममतिनिपुण पञ्चमेऽङ्गे जिनेशा-
ऽऽचार्यानाश्रित्य सम्यग् नमत भगवतीमागम सत्प्रवृत्ता ॥११८॥

समेत्य वश्यान् प्रचुरान् सवादान्, वृत्तान्वितांस्तत्र जनेषु निर्त्तिम् ।
नेतु समाख्यायिकया यतेत, ज्ञाताकथाख्यत्र तथागमेषु ॥११९॥

आश्रित्य वश्यान् स्थितिमीयुषा परा, वृत्तान् सुवित्तान् सुधीरातनोति ।
उपासकाना परमा समद्धा श्रपोपमोपासक आगमे बुधा
( विदाम् ) ॥१२०॥

स्वनश्वर्यंत प्राप्त विबुधनिसरे पूज्यपदक,
तदुत्कीर्ति कुर्वन् निजपरिकर यत्ननिपुणम् ।
तत्र कुर्यात् स प्रगुणफलद शुद्धपथग-
स्तथा न्याय्या पूजा जिनपतिविधिना ऽकृति तताम् ॥१२१॥

प्रवृत्ता मोक्षायाऽनघमतिधरा सद्व्रतजुषो,
गुरुत्वात् पापाना प्रभव इह नैराज्ययपदे ।
पर सत्यङ्कार विमलतरमाप्याचलपद,
यश्या ये जाता स्मृतिरनुपमाऽनुत्तरकृता ॥१२२॥

ज्ञान समस्ति निखिलाङ्गभृतामनून,
भोगेऽत्र दु खसुरयोर्गुणमात्ररूपम् ।

प्राग्बद्धकर्मफलमेतदिति प्रमित्य,
सुज्ञो विपाकमनुसंस्मरतीह शास्त्रम् ॥१२३॥

पापं पुण्यं च यत् स्याद् भविजननिचये निश्चयादाश्रवात्त-
द्रोधः शक्योऽस्ति विश्वे श्रयति यदि पदं संवरात्मैकरूपम् ।
नाशोऽपीष्टप्रदाता ननु तत इति तद्वर्णकं प्रश्नपूर्वं,
सद्व्याकृत्या मुनिपसमुदितं श्रीयतां कर्ममुक्त्यै ॥१२४॥

दृब्धं श्रीदृष्टिवादं सुनिपसुकृतिभिर्विश्वगार्थप्रभासं,
पञ्चाङ्गं द्वादशाङ्गं परिकृतिसहितं सूत्रपूर्वानुयोगैः ।
युक्तं पूर्वैश्चतुर्भिर्दशगणकयुतैश्चूलिकैश्चित्ररूपैः,
साधो ! स्तोतुंप्रमुत्कः समश्रुतभणकं स्वागमं चित्प्रसक्त्यै ॥१२५॥

श्रद्धा तर्कानुसारी श्रयति विधिगतं यत् सधर्मान्यधर्मं,
ज्ञातं षट्कायहिंसादुरितविरतियुक् तत्प्रसिद्ध्यै ह्युपाङ्गम् ।
तीर्थ्योऽर्हन् मार्गयुक्तान् विविधगतिगतान् दर्शयच्चाग्रिमं तद्,
वन्दे श्री औपपातं जिननमनमहैः (सञ्चितं नूनमेषः) ॥१२६॥

कुतीर्थिकः पुरा भवञ्जिनान्तराध्वसंश्रितः,
स नाकिधाममोक्षसौख्यसंयुतो भवन् यदा ।
दर्श्यते तदा मुनेः परा रतिः श्रीआर्हते,
राजपृच्छया युतं ह्युपाङ्गराजप्रश्नकं
(द्वितीयमाश्रये सदागमं श्रुतौ रतः सदा) ॥१२७॥

जीवाऽजीवप्रमुख्यान् यदि च दशविधान् सत्पदार्थान् शृणोति ।
साफल्यं तस्य यः स्यादनुमननपटुरित्युपाङ्गं तृतीयम् ।

जीवाऽजीवाऽऽस्रवमुखयाऽधिगमपदयुत यद् वृणोत्यर्थमस्या,
धैर्यस्य बुद्धिगम्य द्विविधमुपगत स्तौमि गत्रागम तम् ॥१२८॥

निर्कीर्णानां रक्षाविधिरतुलसाहसकृतिपरा,
सुरत्नाना यद्वद् भवति च पर प्रोतविधिना ।
यथा मान प्रोते सुगमविधिना रमणविधि,
तथाऽनन्ता स्याता सुगमविधिनोपाङ्गनिचितौ ।
( तथोपाङ्ग तुर्य श्रुतिधृतिपरं सत्समुदितम् ) ॥१२९॥

यद्यपि पूज्या द्वीपान्तरगा पूज्यगणा सुधिया शुचिकार्या—
स्तदपि च जाता ये स्वद्वीपे पूज्यतरास्ते निकटतरत्वात् ।
तल्लेन महिमाक्षितिपान न्यायमनुस्मृत्यैव विबुधा,
जम्बूद्वीपपदोपगताङ्का प्रज्ञप्ति महयामि सुगाहम् ॥१३०॥

भोगो रक्षा च विश्वे सनुगृहसिचयाकल्पतल्पादिकाना,
संस्काराच्छुद्धितश्च न तु समधिगते साध्यसिद्धिस्तथैव ।
ज्ञानादौ दुर्लभे तत्प्रतिनियतमिह प्रापिते साधुधुय,
सर्व साध्य सुरेनेह भवति मनश्चित्र्यरूपो रमेत ॥१३१॥

मर्यादा रक्षणीया ननु सुपथगते पूतपुसु प्रवृत्ते—
स्तृष्णया नवाचि सिंहाभक उदितरुचि स्त्रीयमेवाप्ति भक्ष्यम् ।
तद्वन्मोक्षाप्तनीहापितशुचिहृदयो वर्तते सूरिवृत्ते,
मार्गे दोषेऽप्रवृत्तो मुनिरुदितवृहत्कल्पसूत्रं श्रयन् हि ॥१३२॥

शुद्धि पापानुकारा न च समविधिना बैर सवश्च सर्वा,
यद्वचारित्रपात्रे न सकलमुनिभिर्नैव चैत्यप्रकाय ।

भेदाः पञ्चात्र शुद्धा व्यवहृतिनिपुणाः प्रोचिरे शास्त्रविज्ञ-
स्तच्छ्रुद्धा पात्रविज्ञा व्यवहृतिनिपुणं शास्त्रमेतच्छ्रदध्वम् ॥१३३॥

आद्यान्तिमार्हद्वरशासनाश्रिता, द्विसन्ध्यमावश्यकनिर्मितिं गताम ।
द्विधौघसंच्चक्रगतां समाहृतिं, श्रीओघनिर्युक्तिमतः श्रयन्तु ॥१३४॥

यथाकल्पं प्रोक्ता मुनिपमहिता कल्पकरणि-
स्ततः कल्पा ज्ञेया विविधविधिना भूरिभणितीः ।
बृहत्कल्पे प्रान्त्ये रसमिति मिता या प्रभणिता,
द्विचत्वारिंशद्भिस्थितिरुचिरुपास्याऽत्र कल्पे ॥१३५॥

सूर्याश्चन्द्रमसो जगत्यतितरां तिर्यग् जनानां हिताः,
सङ्ख्यातीतमितास्तथापि सुतरां धर्मे कृतानादराः ।
ते प्राग् जन्मनि, तेन कल्पगमने नापुः परं दैवतं,
सूर्याच्चन्द्रपदाङ्कितं ननु ततः प्रज्ञप्तियुग्मं श्रये ॥१३६॥

निरयावलिकां श्रुतपदगमिकां धर्मविराधनसङ्गतिकां,
अन्त्याङ्गानां पञ्चकगानां स्मृततदुपाङ्गदशाश्रयिणाम् ।
स्मरत सुमतयो गुणततगतयः पञ्चोपाङ्गं घृपरतयः,
श्रुतमिह सर्वं हृतमदगर्वं स्तुतमिदमनघपदाप्तिपरम् ॥१३७॥

फलं द्वैधं धर्मे जिनपमतगे सन्मुनिमतं,
ससाध्यं प्राप्यं वै शिवसुखयुतं नाकिसुकृते ।
शिवोद्युक्ता भव्या इतर इतराश्रितियुता,
दशाश्रौते द्वन्द्वं हितकृदितराश्रितमरम् ॥१३८॥

अङ्गाद्या श्रमणत्वपर्यगणनामाश्रित्य देया मता–
छेदाङ्का परिणामिता पुनरुरीकृत्यान्यथा नैव तु ।
सत्यप्युत्तमभावुके मतमिद मात्र श्रुतेस्तुयर,
श्रीयुक्त महताङ्कित श्रयतु तच्छ्रेयो निशीथात्मकम् ॥१३९॥

दृशेष्वशेषेषु नृपावलीना, साध्या समाचारपरम्परैव ।
पर विभिन्ना खलु दण्डनीति श्रीजीतकल्प सदिनाश्रयोहितम्
( येन ) ॥१४०॥

दृष्टा भूमिर्विविधनिधिना धान्यसार्थ सदुप्तो,
दृष्टो मेघो निमलदकरानीतयोऽपि निलीना ।
तत्साफल्य स्वकभृतिफलात्तद्वदन्त्यभागे,
धर्मी चेन्न स्यात शरणमुनक सश्रयी स्यात् सुभाव ॥१४१॥

मति क्षुतेनास्ति न कासिते न, यथैव आयेत नृणा सुयुग्मिनाम् ।
मुनिस्तनोरातुरभावमन्त्ये, ज्ञात्वाऽऽद्रियेतातुरसङ्गति तत् ॥१४२॥

दीर्घं मान्य यदि च धृतिधरो जीवितान्ते निशङ्की,
दीर्घा कुर्यात् प्रतिपदविधिनाराधना ज्ञानमुख्याम् ।
न्यक्ष दयाता मुनिगणहितम्मातुरेऽत्र विशाल,
प्रत्याख्यान महन्नुगत नम्यते नित्यमग्र्यैः ॥१४३॥

आराधनामातुरयाम्यमवरा, प्राप्तो मुनिर्भक्तमरन्यमेव ।
अन्त्योपग सद्गुणयाव्ययामि तत् प्रकीणक भक्तपरिज्ञयोन्तिम् ॥१४४॥

मोक्षाप्तये सन्मुनिरादतो यत्, मृतिं समेष्या विदुषोऽधिगन्छेत् ।
प्राग् द्वादशाब्दा विन्धीत सल्लेखना सुसन्मागतोऽथमिष्यते ॥१४५॥

सातोदयान्नैव भवन्ति चित्रा, रोगोपसर्गादिसमुद्भवा व्यथाः,
भवेद् क्षुधा साऽनशनोत्थिता तकां, सहेत सत्तन्दुलमानबोधतः ॥१४६॥

कृता बुद्धिर्धर्मे भवति सुखतो मानवभवे,
परं चेदन्त्येऽङ्गे भवति सुभगा स्याद् गतिरिह।
दुराराध्यो ह्यन्तो भवति सुगमश्चन्दकमिद-
स्ततो विज्ञा वित्तागममसुगमेयादरपदम् ॥१४७॥

नरः कृतज्ञो गुणकृन्नतो परः, स्तवे परस्तत्स्तुतिकृन्नराणाम्।
मार्गं प्रदर्श्याहेदभिष्टवानां, देवेन्द्रस्तुत्या स्मरणात् कृतज्ञता ॥१४८॥

क्षयादि कालादिकृतं तु कर्मणां, प्रायाय वुद्ध्वाऽर्हमुगेद् गणी तकम्।
विद्या गणीना स्तुतिमर्हतीतो, वुद्धा न यत्साधनविप्रमोपाः ॥१४९॥

सर्वं कृतं स्यात् सफलं मुनीनां, समाधिमाराध्य मृतिं व्रजेयुः।
प्रेतान् स्मरेत् तत्सुसमाधिना ये, स्तुत्यस्ततो यो मरणे समाधिः॥१५०॥

यद्यपि केवलमुत्तममुक्तं, तदपि न तीर्थपदाय समर्थम्।
नन्दीश्रुतमिह तत्क्षममाप्ते-रुक्तं नाट्ये यथा वरनन्दी ॥१५१॥

व्याख्यातृवर्ग उदितो जिनमार्गगामी,
लोकोत्तरेतरविधेः प्रभुमार्गमाख्यन्।
द्वाराणि तद्विधिपराण्यनुयोगयुक्ति,
भव्यानुयोगकरणे स्मरणं हि तेषाम् ॥१५२॥

जिनागमानां जितरागमाना स्तुत्योद्गमानां स्तुतिराप्तमाना।
जीयाद्यथा सिद्धगिरौ च सूर्य-पुरे शिलाताम्रपटे जिनौकसी
(ऽर्हदागमाः) ॥१५३॥

आम्नातोऽसानन्त्यानर्त्ता नरो भ्रमी पक्षे शुक्ले,
रूढ गूढ दहन्नु सरलेतर प्रथेमांगम् ।
सत्सम्यक्त्वो व्रते दृढसन्मति मोक्ष गन्ता,
हन्ता जा (या) ते सन्नागमसत्थयी ॥१५४॥

पापामयेषु परमौषधमागमोऽय, कल्याणकल्पलतिकोद्गमवारिधार ।
सन्देहसानुदिलयैस्पविप्रभोऽय, मोक्षाध्वसङ्गमकरो नरसाथ
वाह ॥१५५॥

श्रद्धावानपि यो भवेज्जिनपते सद्धानमत्योज्झितो,
जैनेन्द्रागमसञ्चितेऽथनिचयेऽनाभोगतोऽसद्गृहे (याऽगुरा) ।
श्रद्धाया निगतो भवेद् न्दतरश्चेत कल्पितेऽर्थे नर ,
सत्सम्यक्त्वसुनेपगागचलित स मागगोक्तो भ्टढम् ॥१५६॥

गणधरै पुरतो यदुरीरितं, निपन्न जिनदेशनसद्मनि ।
निखिलभानविदा स गतोपमो, भविमतो महिमाऽऽगमसन्तते ॥१५७॥

श्रद्धेयोऽसौ जिनपतिगदिते ह्यागमे शुद्धदेशी,
मिथ्यादृष्टिभवति यदि याऽभव्यजीव सुपात्रम् ।
सत्सम्यक्त्वं श्रुतगणगदित दीपकाम्य पर स,
चेन्न ज्ञातो गतमननवरो ह्यागमोत्थान परो वै ॥१५८॥

जीवाऽजीवाश्रवाणा शुचितरसुमति नन्वने सघृती च,
पुण्ये पापेऽपचाये कृतदुरिततते शुद्धनि श्रेयसे च ।
ज्ञान मन्येत विज्ञैर्यदि भवति तकत् ध्यागमैकान्तदृष्टि ॥१५९॥

न दृष्टो न वित्तो न च जगति वृत्तान्तसरणि-
र्न वार्त्ता नो शब्दोऽणुरपि च यस्यास्ति विदितः ।
न देशो न वेषो न च परिकरस्यांशसरणं
कथं ज्ञेयो देवो यदि च न भवतीह्यागमगतिः ॥१६०॥

न यो द्रव्यं दत्ते द्रविणनिचयं नो न च गृहं,
न योषां नो पुत्रं न च शरणदो रोगनिचितौ ।
न यस्त्राताऽरण्ये न भवति चरणे विक्रमपरा-
भवे त्राता साधुर्भवति शरणं ह्यागमबलात् ॥१६१॥

यो द्रव्यं ललनां विचित्रविषयान् स्वातन्त्र्यमुत्सादये-
दाहारेऽपचिति सदैव गमयेन्निष्काशयेत् कल्पनाम् ।
दाने शीलधृतौ तपस्यनुपमे सद्भावनाभावने,
भव्यं धर्मवरो नुदन् शरणदो मान्यो भवेदागमात् ॥१६२॥

मुक्तिर्नैव भवेद् भवभ्रमिभृतां कालादनादेर्ध्रुवात्,
सत्यं स्यात्तदिदं यदा नहि भवेन्नाशो ध्रुवाज्ञानगः ।
सर्वेषां भवधारिणां विषयजं सौख्यं सनानादिजं,
युग्मं नश्यदुपेक्ष्यते यदि पुनश्चेज्जैनमार्गागमात् ॥१६३॥

सत्स्वप्यसङ्ख्येषु सदा सुरेषु, तथैव तिर्यक्षु च नारकेषु ।
सद्दृक्षु तीर्थं न मतं जिनेशैस्तत्रास्ति यन्नो जिनपागमोदितिः ॥१६४॥

मोक्षे चतुर्गतिभृतां प्रचुरा समीहा,
वीर्यं च भूरि तनुवाग्हृदयोद्भवं च ।
सम्यग्दृशः सुमतयश्च तथापि तं न,
लब्धा न कोऽपि महिमाऽद्भुत आगमानाम् ॥१६५॥

शून्या सन्ति गतयो न चतस्र आप्या,
सम्यक्त्वबोधयुगलेन, न जातु मुक्ति ।
एकस्य तत्र किमु कारणमुज्ज्वल न,
चारित्रमेव, यदिद जिनपागमाऽऽप्यम् ॥१६६॥

सयम सदैव सवरोद्धुरो, निजरापि नवनवास्ति तत्र वै ।
नैव मोऽस्ति सयमान्तरात्, पर भवेदसौ जिनागमोद्धुरात् श्रित ॥१६७॥

रूपेण भेदेन तपेन शुद्धता, यन्नागमाना ततिरुद्धुरा धरेत् ।
तत्त्रैव सामान्यवमास्ति त्रिष्ठे—न चागमैरुज्झितमस्ति दर्शनम् ॥१६८॥

द्रव्ये समेतान् समपर्ययान् ये, नुवन्ति ते मोक्षगमाय योग्या ।
सन्नागमास्तेर्जिनसूरिधर्मा, भव्यै सदा सेव्यतमा भवन्ति ॥१६९॥

अष्टौ वरे जैनमतेऽत्र शासने, प्रभावकास्तत्र सदागमात्र श्रित ।
आद्यो भवेत् प्रावचनी परे पुनर्विशेषका नैव तदुज्झिता खलु ॥१७०॥

भाषाया समितिमता मतिमता वाचश्च गुप्ति परा,
य सर्व दिवस भणेदपि नर शास्त्रोक्तवाचा विधौ ।
निश्चीभूय परो नरो यदि पुनर्नैवोक्षतीह क्षण,
नास्यामू उदिते, सदागममतिर्भूयान्नर सवदा ॥१७१॥

आदृशो नैव दृत्त करणविधिगतो नैव नैषेधिकोऽपि,
शिष्याणा सयमादौ जिनपतिभिरिहैकान्ततो मोक्षमार्गे ।
उत्सर्ग सापवाद जिनपतिकथित भो स्मागमज्ञीणा,
मन्वाना स्युस्तदवद्वयनिगम्परो ह्यागम सुज्ञमान्य ॥१७२॥

निरागमा निरम्बरा जने पशूपमोद्वहा,
निरम्बरत्वमेव मार्गमार्हतं ब्रुवन्त आः ! ।
श्रयन्ति केवलं स्त्रियां न चान्यतीर्थिकादिषु,
न चेपणां सदागमांस्ततः श्रयन्ति वित्तमाः ॥१७३॥

यदाऽऽगमानां परमा विभूति–र्गीतार्थवक्तृत्वसुधीश्रुती श्रिता ।
तदैव धर्मे विजयोऽस्ति जैने न चागमैः शून्यमिहास्ति शासनम् ॥१७४॥

दिगम्बराणां परमेश्वरा इह लिङ्गाण्डयुग्मं जनवद्धरन्ति ।
भवन्ति ते हास्यपदं हि लोके, नेयं व्यथा छन्नपदे समागमे ॥१७५॥

नग्नाटा रचयन्ति नादमहितं यज्जैनवाग् नाक्षरी,
तिर्यग्वत् स्फुटतोज्झिता ननु सकेत्याहुर्निरासागमाः ।
ये तु स्वागमसंश्रिता बुधवरास्ते योजनोन्मानगां,
मन्वाना जिनवाचमार्हतमतं सर्वाङ्गिवोधं स्तुयुः ॥१७६॥

सामान्येन जनैर्महाङ्कितनिशीथोक्ता मता पञ्चमी,
ज्ञानस्योत्तमपर्वतामनुगताऽऽराध्या ध्रुवं सत्तमैः ।
चेत् सूक्ष्मैक्षिकया परं यदि समालोच्येत विज्ञैर्गणे,
शब्दास्तेऽशनिवेदिनस्त्विति नयात् सा पञ्चमी स्वागमात् ॥१७७॥

जिनागमानां श्रितसद्गमानां, हृतावमानां धृतसत्तमानाम् ।
सत्सङ्गमानां विमताधमानां, तनोत्वमानां स्तुतिमात्तमानाम् ॥१७८॥

हत्वा विस्तृतमिथ्यात्वाऽऽन्ध्यं कृत्वा कर्मफलं शुभसन्ध्यं,
हतकोटाकोट्यधिकं ध्यान्ध्यं भित्त्वा ग्रन्थिगतं दुरितान्ध्यम् ।

लब्ध्वा सम्यक्त्व गतरागभ्य धृत्वा मार्गगजनशुभमध्य,
श्रित्वागममतमुपगुणमभ्य गत्वा नन्दत शिवमपवध्यम् ॥१७९॥

सहस्र वक्तॄणा भवति च यदि प्रावचनिना,
पराथाद्योतोल्क जिनपतिमते साम्प्रतगतम् ।
तथापीष्ट तीर्थे प्रभुवचनसाङ्गत्यनिपुणे,
यदि स्यात् पुस्तस्थागमततिगतमेकगदितम् ॥१८०॥

साङ्गत्य भविना मदेष्टमनघ यत्सल्लघवीय महत्,
तच्चेदागमसङ्गम यदि भवेत् तीर्थोच्छिदे नैव तत् ।
पूर्व यत्कमलप्रभेन गणिना चैत्याश्रिताना पुर,
सिद्धान्ताध्वनिरूपणेन विहित तीर्थङ्करत्व महत् ॥१८१॥

जिनेन्द्र महत्यन्वह सत् त्रिकाल, विभूत्या महत्या गताऽऽश समग्रम् ।
विरुद्ध यदि स्याज्जिनेन्द्रागमेस्त द्धवस्यैव धृद्धयै भवेत्तत्समग्रम् ॥१८२॥

साधुयद्वैक ण्यानघजिनमतगतो विद्यते ह्यागमाना,
श्रद्धावा सत्यमर्थं परमपदमविलीयेता तत्र साक्षात् ।
न त्वन्ये प्रभूता जिनपतिगदितादागमातीतवाग-
स्तीर्थ यत्सत्यनिष्ठ जिनकथितमिद तच्च शुद्धागमीयम् ॥१८३॥

जनेन्द्र शासन तूदितमिह निखिल सापवाद न चान्यत्,
यावान् स्यात् बन्धहेतुर्भवगतिधरणे मोक्षसाध्येऽपि तावान् ।
कर्माद्वान्त्येकहेतुर्भवति परमिहोत्तीर्णमाप्तागमात्र,
प्रोक्त यस्मादनेके जिनपतिगदितोत्थापका निह्नवा वै ॥१८४॥

स्यादागमैकरसिको नर इद्धबोध-स्तत्त्वं शुभं जिनगतं हृदयेऽनुबिभ्रत्।
ज्ञाता तदीयगुणसञ्चयशुद्धतायाः, स्यात्तत्र तत्र परमादरभाक् च नित्यम्

गुर्वाराधनतत्परा नर इमे साक्षात् सहस्रात्परे,
दृश्यन्ते शुभयोगविघ्नविगमे वद्धादराः स्वल्पकाः।
तेषां या परिसेवना सुविधिना साप्यल्पकानां यतो,
यः स्यादागमतत्त्वबोधरसिकः स स्यात्तथाचारवान् ॥१९७॥

यो ह्यागमपरतत्त्वमीक्षत इहावर्त्तान्त्यभागागतो,
नाऽसौ पश्यति धर्मतत्त्वनिपुणः शास्त्रेऽपवादात्मताम्।
यावच्चक्षुपि वर्त्तते तिमिरकं तावद्यथार्था न दृक्,
तत् सुज्ञः परमादरे धृतमनाः शुद्धागमं संश्रयेत् ॥१९८॥

सुपात्रं यद्दानं भवशतसहस्रेपु सुलभं,
न, जीवानां जातु प्रचुरतरपापाक्तमनसाम्।
यदा जीवे भावः प्रचुरतरपक्षैकसुभगो,
महादानं लब्ध्वाऽऽगमततिरसश्चेद्धृदि भवेत् ॥१९९॥

अनन्त्यावर्त्तेपु प्रचुरतरसत्पुण्यसुभगं,
भवेद्दानं यस्मात् सुरनरगतं सौख्यमतुलम्।
अलं मोक्षायैकं भवभयभृतामागममतं,
महादानं प्रान्त्ये सततविधिसत्पात्रसहितम् ॥२००॥

दायं दायं मुनिभ्यो विधियुतममलं दानमाप्नोति सौख्यं,
ध्यायं ध्यायं जिनानां निरघविधिपदं यत् करोत्यागमानाम्।

धाय धाय गुरूणामनुमतिममला भृत्यवर्गस्य वाधा
हार हार तदेतच्छिवपन्सुभग सेवनीय महाङ्कम् ॥२०८॥

जिना दीक्षाया प्राग् ददति धन [illegible] शरद ,
सदा प्रोक्त शास्त्र जिनमहादानममितम् ।
यदि श्रित्या शुद्धागमततिं दानमयने,
सदतच्छ्रेयस्यै ननु महादानममलम् ॥२०२॥

नास्ति विशेषो भक्ते प्रीतेर्जिनपदृपान्दे,
ह्यागमतास्यात् सद्बुद्धीना दानादि (सुकृत) समान्दे ।
सदनुष्ठानेऽस्त्येषोप्यत्रागमे परमान्दाद्,
धामानाथ सत्माधूना भवेदत्र ग्न हि ॥२०३॥

स्वस्था गेह तात जननी तनूजमिहाग्नना
बन्धु क्षान्ति पुत्री पुन मित्राणि च सौम्नात् ।
जात मानुष्यसाफल्य कालादिविधानतो,
नितत सूरी चेत् सन्धत्तेऽनघागमसन्ततिम् ॥२०४॥

पूजा सत्परमेष्ठिना यदि भयात् कुर्वीत त्रिसन्ध्य मना,
पुण्पार्ध्यरमाधने गुणितैरभ्रान्तिवरा सयम (त) ।
सा चैत्यागमसङ्गता यदि तदाऽत्याबाधसम्पत्तये,
नो चेत् सा परमार्थसिद्धिविकल दत्ता सुरात्ते सुगम् ॥२०५॥

ध्याने यो निरत शुभो मुनिगण मात्मध्वने शुद्धिदे,
ध्यात्वाऽसौ जिनसम्पद सुरकृता छत्रादिकापूजिताम् ।
दृष्टो नैव जिनो न चाऽमरकृता शोभा प्रतीहारिणी,
मत्वाऽसौ जिनागमेभ्य उदितध्यानोऽपरालम्बना ॥२०६॥

मोक्षायोद्यत आर्हतः खलु भवेन प्रीतः पदार्थव्रजं,
पर्यायात्मकतां श्रितं प्रणिदधन् मोक्षो भवो नान्यथा ।
दुःख्येवाऽसुधरो जनो भवततौ शश्वत्सुखं स्वे स्वदन्,
श्रद्धायाऽऽगमसन्ततेः परमिदं युक्तं वुधो मन्यते ॥२०७॥

साध्यं सिद्धिपदं सदा भवभृतां नान्यत्र दुःखान्तको,
दुःखाभिन्नमपातसंयुतमलं प्रेप्साश्रितिर्यत्र नो ।
तादृक् सौख्ययुतं पदं यदि परं नान्यत् क्वचिद्विद्यते,
निश्रेयं पुनरेतदाप्तकथिताच्छुद्धागमात् पण्डितैः ॥२०८॥

नाशास्त्रं मतमस्ति सम्मतिपदं विद्यामुखानां जने,
तत्राप्येक उशन्ति वक्तृरहितं तत्कल्पितादीश्वरात् ।
एके रागद्विषादिसङ्गतिपरादग्न्यादितः केचन,
सर्वज्ञोदितमागमं यदि परं मुक्त्युन्मुखा आर्हताः ॥२१०॥

सत्यं शास्त्रमवाक्कृतैर्नररवैस्तुल्यं परं गम्यते,
व्याख्यात्रा निजवुद्धिवैभवबलाल्लोके यथाचार्यते ।
आरम्भे च परिग्रहे यदि परं ग्रस्ताऽनृतं ख्यापये-
द्धन्योऽसौ जिनपागमो निगदितो योऽकिञ्चनैः साधुभिः ॥२१०॥

परे जिनोक्तान्मततो विदूरगा वदन्ति भाव विगुणं गतक्रियम् ।
परम्परानिर्गतमुद्भवंते खपुष्पतुल्यं न तथा जिनागमाः ॥२११॥

अनेके गुणाः कारणात्तु स्वकीयात्, प्रजाताः क्षणे नाद्यमाप्यं गुणैस्तत् ।
तथोद्भावने तत्परो नैव जैनः, कथञ्चिद् भवेदागमः शुद्धदेष्टा ॥२१२॥

द्रव्ये क्रियायां च गुणेपु नित्यं, सत्त्वं परार्थप्रतीतिनिवेद्यम् ।
सतो ह्यसत्त्वं परतीर्थिकानां, स्वभावसत्तोद्भवनो जिनागमः ॥२१३॥

समवाय समवायो विदुषा परिपठति कल्पितमनाये ।
निखिला गुणान्योऽयं, श्रितास्ततो नागमस्त्वेवम् ॥२१३॥

साधर्म्यं वैधर्म्यं, पदार्थधर्मौ तथा मतिर्मोतु ।
समवेतमेकम यत्र तथेति जिनागमो नैवम् ॥२१४॥

तादात्म्यतो ह्यभावा , श्रिता पर वस्तु भिन्नताश्रयिण ।
इत्थमन्योऽन्यविरुद्ध, न वक्ति जिनपागमो जातु ॥२१५॥

यो ग्रन्थस्य गतान्तरायचरमप्राप्त्यै विधत्ते वुध ,
शास्त्रे मङ्गलमादित स मनुयात् प्राग् जन्मतो नास्तिकान् ।
माङ्गल्यैकविधौ नु तात नुद धर्माद्धग नास्तिकान्, (?)
नो जैनागममाश्रित स्तगुण ह्याप्त स्मरन् मङ्गले ॥२१६॥

यो जैनागमबाह्यग स मनुते स्रष्टारमुत्कर्मण,
जीवानामशुभ शुभ च नियत कर्मोपभोक्तेश्वर ।
सृष्टेर्यत् प्रविधानमर्हति ननु शून्योऽस्य पुण्य न तत्,
मन्येताऽकृतसङ्गम कृतहर्ति ह्यऽन्यागमाना स्थितिम् ॥२१७॥

निदित विदुषा निचयस्य सत्त्व, नहि कार्यं स्यान् क्रियया रहितम् ।
मनुते परमेश्वरमक्रियक, समकर्तृपद न जिनागमग ॥२१८॥

मनुतेऽक्षजमथसम ज्ञान, जगता परमीश्वर ऊरीकृते ।
रहित मतमुत्तमज्ञानमर न जिनागम एवमयुक्तिपर (द) ॥२१९॥

नाकारण कार्यमिहास्ति किञ्चि–दिति प्रवादो विदुषा गणमत' ।
तथापि जैनागमबोधशून्या अपितृक पुत्रमुदाहरन्ति ॥२२०॥

न मातृशून्यस्तनयस्य सम्भव, आवालगोपालमितीह सिद्धम् ।
म्लेच्छा हि तातं परमेश्वरस्य, लुम्पन्त आख्यान्ति प्रभूं न
चाऽऽगमाः ॥२२१॥

इमे वाह्यास्तीर्थ्याः कथमपि नहि प्रीतनि विभो-
र्वचस्तेषां कण्ठे लुठति फणिवत्मानरहितम् ।
समं विश्वे दृश्यं भवति विभुतः कायरहिता-
दितीक्षित्वाऽयं ना भवति नितरामागमरतः ॥२२२॥

परैः पदार्था उदिता विहीनाः, शक्त्याऽत्र नार्थोऽस्ति विहीनशक्तिः ।
नासौ क्रिया नैव गुणश्च नार्थो, जिनागमज्ञैर्व्यथितं जगत्परम् ॥२२३॥

पदार्थानां चित्रां ननु च जगता शक्तिममितां,
पृथिव्यम्भोवायुप्रभृतिभावेषु नियताम् ।
विवुध्याऽध्यक्षं द्राग् यतत इह तन्मतिमती,
तकां श्रित्वा सम्यग् जिनपकथिताऽऽगमगतिः ॥२२४॥

जाता नैव सचेतना न च पुनश्चैतन्यशून्या अपि,
तेनानर्हविभागमाहुरनलाः पृथ्व्यादिद्रव्याश्रितम् ।
भूतग्रामविधानतो विधिरिह प्राणेष्वपि प्रासुके,
ह्यौदारादिविभागमाहुरमला जैनागमाः सत्पथाः ॥२२५॥

द्रव्याण्यनन्तानि भिदोऽप्यनन्ता, वोध्यानि सर्वज्ञपदोक्तिमानात् ।
तद्द्रव्य-तद्भेदविधावबोधो विरागसर्वज्ञनरागमे न ॥२२६॥

जीवोत्क्रमोद्भावितभूरिभेदाः, क्षित्यादयो नाणुभिदोद्भवास्तत् ।
अन्यान्यनामेन भिदाविरोध औदारिकाद्या वहुभिज्जिनागमे ॥२२७॥

अनन्ता अर्थाना जगति विभिन्नो व्यक्तयनुगता,
द्विकाम्भज्ञाया भवति विज्ञातमिति विना ।
ततो ध्वान्तच्छायाप्रभृतिमदद्रव्यपटुता,
जिनोक्तानां सिद्धा प्रमितिपरमाप्तागमततिं ॥२२८॥

गुणान् पर्यायाश्चागमततिरिहानन्तगणिता–
नुवाच प्रत्यर्थं विबुधगण इत्थं मतिमयेत् ।
शिशुर्नोडाप्राय परमततो मानमुदितं,
न चाप्यन्यो बाधो ह्यवगत इहान्यैः सुमतिभिः ॥२२९॥

द्रव्ये गुणे परिमितिं न कणाद आह,
युक्ते क्रियाभिरनुगामिभिरस्तपर्याय्यैः ।
मोक्ता विचक्षणपराय पराभिलापे–
र्नयोऽस्ति विप्लव इहागमसम्प्रदाये ॥२३०॥

वैशेषिकेण निमित्त कथित स्वसूत्र,
ध्वानस्त्वधमसप्तशारमकर्मजातम् ।
नित्यान्विपु प्रमुखधममुवाच शिष्य,
आप्तागमोक्तिविमुखा विटम्बित किम् ? ॥२३१॥

साधर्म्यान्वित शिव कणादुनोऽप्यक्तादितत्त्वायतनान्,
माहेश्वरा, परमुखारिसमतयो भक्तश्च वर्तन्ति ।
विश्वम्प्रममातामनिगुणान्धास्या गिरामन्वत,
उच्चुर्नोम्रगण यथा मन्मिथिय(गर्ना)जनागमान्द्वयम् ॥२३२॥

ज्ञानानन्दविवर्जितं खलु शिवं वैशेपिकाः कल्पितं-
र्दुःखैर्मुक्तिमिहाक्षपादमतिकैर्वेदान्तिभिर्ब्रह्मणि ।
मेलं वैष्णवशैवशाक्तमतिभिर्देवात्मनोः सद्द्वयं;
नित्यानन्दसुखाश्रयं गतभवं जैनागमास्तच्छ्रिताः ॥२३३॥

पदार्थे सत्त्वं यत्र च खलु पदार्थात्मनि गतं,
स्थितं तत्तस्मिन् यद् वहिरनुगतो वन्धनयतः ।
इदं मन्वानोऽयं विदमभिगतेऽर्थेऽखिलगतां,
कणादोऽध्यक्षं सा न भवति हृतिः स्वागमततो ॥२३४॥

मोक्षायाऽऽलिखिता शुभा मुनिवरैर्लोकोत्तरा पद्धति-
र्वास्या चेत्तनुरर्द्यते रिपुजनैः सत्कार्यते सौहृदैः ।
श्रीखण्डेन, तथापि शुद्धमनसः साम्यं द्वयेऽस्मिन् भवेद्,
वैराग्यात्तसमञ्जता जिनमते योग्यागमानां ततिः ॥२३५॥

समस्ता विद्वांसो विदितविविधार्थोच्चयगणा,
न देवाद्यैर्वार्यं मरणमनिशं यन्निखिलगम् ।
न चानायुष्कोऽत्राणति विदितसर्वौपधिगण-
स्तथाऽप्यङ्गी नित्यं तदुभयमना आगम ऋणः ॥२३६॥

लोकोत्तराध्वगमिता व्रतिनां विशुद्धा,
यन्मोक्षमेव विविधक्रियाऽऽप्तुमिच्छा ।
देवासुरादिसुखसाध्यपरा इमेऽन्ये,
कोऽन्यो वदेज्जिनवरागमतोऽपरोऽदः ॥२३७॥

दु ख सर्वसुरासुरोरगगतान् मृत्योरसूना दृढ,
सौख्य पौद्गलजालसम्भवमल स्यात् प्रार्थनाया पदम् ।
एव कर्मनिरन्धनैकविधुर प्राणी भवेऽटाट्यते,
धन्योऽय जिनपागमो यदुदिता मोक्षैकमार्गप्रथा ॥२३८॥

हा हा ! भीषणकाल एष न यत सत्यार्थदृष्टौ रता ,
सूर्याद्या प्रचुराश्च पुस्तकपरावर्त्तायिता वादिन ।
भूमीशा विबुधाश्च पक्षपतिता दाक्षिण्यलोभोद्यता,
अल्पा मार्गरतास्तथापि जयवानाप्तागम शुद्धवाक् ॥२३९॥

स्वप्नोपम, यै सकल भुवनत्रय, यास्य स्वकीय व्यथित निवेदयेत् । -
तथैव सत्र क्षणिक विबोधयन चैष बाधस्त्विगमागमे भवेत् ॥२४०॥

अतीन्द्रियार्थं नहि वेत्ति कश्चि-च्छिन्न भवो वा न च वेदनीय ।
तथापि तद्वाच इय कुतीर्थिता, स्रोऽस्तेन बाधाऽऽगम आप्तसम्मते॥२४१॥

सौख्य दु ख ज्ञान भ्रान्ति, पश्यन् प्राणिषु चित्रविचित्रम् ।
आत्मैको विश्वव्यापी या-वक्ति विरुद्ध न तथाऽऽगमगी ॥२४२॥

चार्वाक पूत्कुरुते नास्ति, परभवगामी चेतनयुक्त ।
जातिस्मृतिदु साध्या सिद्ध, आगममेवाऽऽश्रयते शरणम् ॥२४३॥

भान हेक मतमध्यक्ष, श्रोतृब् शासन् न धरति लज्जाम् ।
शब्दाद्वान्ययिबोध कुरु-श्चाध्यक्षेतरबाधागमवाक् ॥२४४॥

# । मुनिवसन-सिद्धिः ।

वितथवादशिरोमणितां दधत्, विगतवस्त्र इदं जिनशास्त्रगम् ।
अनृतमाह सुशुद्धसितांबरान्, विविधमोहमुदीरयितुं स्यात् ॥१॥

गणभृता गदितं सितवाससां, प्रथमशास्त्रगतं जिनकल्पिनाम् ।
पदमधारयतां सिचयावलीं, प्रथमसिद्धगुणा ननु नग्नता ॥२॥

वितथवादमिमं गतवाससां. गतहृदस्तव मन्वत आस्तिकैः ।
कृतममन्यत नाप्तमतं यकै-र्वचनमागमगं श्रवणे सुधीः ॥३॥

श्रुतमतं जिनवीरविभोर्न किं, वसनधारणमब्दमुपाश्रितम् ।
अधिकमासयुतं सुरनायक-प्रणतपादयुगस्य दिगंबर ! ॥४॥

श्रुतसमुच्चय आद्य उदीरितं, विमलसंयमशालिजिनांसगम् ।
सिचयमाप्तवरैः प्रथमेऽङ्गके, कथय दिग्वसनोऽनृतवाग् न किम् ॥५॥

सुरवितीर्णमुपाश्रितवान् जिनो-ऽम्बरमिति प्रतिपादितवान् गणी ।
श्रुतसमुच्चय उत्तर आदिमे-ऽङ्ग इह साधुसमूहविराजितः ॥६॥

जगदुरर्हदुपासनतत्परा, गणिवराः श्रुतसागरपारगाः ।
वसनमानमुदस्तपरिग्रहा, मनसि बोटिक ! तन् ननु चिन्तय ॥७॥

गणधराः समवायकृतान्तगं, वच इहोदितवन्त उदित्वरम् ।
चरमतीर्थपतेर्वसनादृता-बधिकवर्षमिति प्रविचिन्तय ॥८॥

इषुमितेऽङ्ग उवाच गणाधिपो, विपुलपर्वत आदृतपादपे ।
ऋषिवरे खलु खन्धक आर्हती, समुचितापकृति ननु पश्य तन् ॥९॥

न च वचो वचनीयमपाकृत-नयचय जिनकल्पयुतो येऽग्रम्।
न हि भवन्ति तवे सिचयोज्झिता, सम इहोपधिमेन्यविचिन्तर्ता ॥१०॥

न च स्पस्तन युक्तिपन्न धृते, मुनिररे शुभसयमहेतवे।
उपहृतौ क्षम उज्झितसङ्गमे रजहरप्रभृतौ शिवसाधने ॥११॥

जनिरभूत्तव निश्चितमूढता, निशन्वासस उत्तमसाधनात्।
इतरथा कथमम्बरवर्जन, तत मतस्य रवे स्फुटमीर्यते ॥१२॥

यदि पर सितवाससमुद्भवमव मतान् वसनोज्झननर्तनात्।
ससिचया इति तस्य मताभिधा, प्रस्फुरती भवतीह न चान्यथा ॥१३॥

तव मते नृपसाधन उज्झिते, यतितया चरण न हि साध्यते।
शिवपन्न न च येनलयुक् पुन, तन्महदाग्रजदेतुरिलाहति ॥१४॥

न च गताम्बरिका न हि योषित, परमते यन्मिता वसनोज्झिता।
स्फुटतर तु निभाल्य योगिनीर्न रुचिर रुचित तव तन्मत ॥१५॥

शिशु-मदानिल-भूतगणार्दितो, भवति नग्न इहापि न शम्यसौ।
जिनप-शासनसम्मतमास्यायमनयननमाश्रवसहते ॥१६॥

स्वपर-लिङ्गि-गृहाश्रितलिङ्गिना, निगदिता पदवी शिवसाधिनी।
श्रुततती पटत शुभभाविना-मनुमत तदिहाम्बररर्जित ॥१७॥

ममतया रहितो मुनिराहृतो, यदि परो भवतीह शिव गमी।
मतमिद सदन्याधनिर्गत, श्रयति शुद्धमना श्रुतभानुर ॥१८॥

---